कृतावतरणमङ्गला मूर्धनि उपाघ्राय बलादनिच्छन्तमपि चन्द्रापीडम् उत्सङ्गमारोपितवती। तं च ललाटदेशे वक्षसि च मुहुर्मुहुः परामृशन्ती अवादीत्।

"वत्स, कठिनहृदयस्ते पिता येन इयम् आकृतिः ईदृशी त्रिभुवनलालनीया क्लेशमतिमहान्तम् इयन्तम् कालं लम्भिता। अहो! बालस्यापि सतः कठोरस्य इव ते महद् धैर्यम्। अहो! विगतशिशुजनक्रीडाकौतुकम् अर्भकस्यापि ते हृदयम्। अहो! गुरुजनस्य उपरि भक्तिः असाधारणा। सर्वथा यथा पितुः प्रसादात् समस्ताभिः उपेतः विद्याभिः आलोकितोऽसि, एवम् अचिरेणैव कालेन अनुरूपाभिः वधूभिः उपेतमालोकयिष्यामि" इति। एवमभिहितः लज्जास्मितावनतः निर्गत्य च शुकनासं द्रष्टुमयासीत्। अथ शुकनासभवनं प्रविश्य, पितरमिव शुकनासं ववन्दे। शुकनासः समुद्गतप्रीतिपुलकः तमब्रवीत्।

"तात चन्द्रापीड, अद्य समृद्धाः सर्वाः गुरुजनाशिषः। अद्य प्रसन्नाः कुलदेवताः। क्व इदं वयः। क्व इयम् अमानुषी शक्तिः। क्व च इदम् अशेषविद्याग्रहणसामर्थ्यम्! अहो! धन्याः प्रजाः यासां भरतभगीरथप्रतिमो भवान् उत्पन्नः पालयिता"। इत्यभिधाय च स्वयम् आभरणवसनादिभिः अभ्यर्च्य विसर्जयांचकार। विसर्जितश्च उत्थाय अन्तःपुरं प्रविश्य दृष्ट्वा वैशम्पायनमातरं मनोरमाभिधानां, कुमारः पित्रा पूर्वकल्पितं भवनं जगाम। गत्वा च शयनीयगृहे एव इन्द्रायुधस्य अवस्थानमकल्पयत्। एवम्प्रायेण च उदन्तेन अस्य तद् अहः परिणतिमुपययौ।

* * *

## ११ चन्द्रापीडस्य मृगयाविनोदः

अपरेद्युः प्रभातायां निशीथिन्यां चन्द्रापीडः समुत्थाय, समभ्यनुज्ञातः पित्रा, अभिनवमृगयाकौतुकाकृष्यमाणहृदयः, भगवति

अनुदिते एव सहस्ररश्मौ, आरुह्य इन्द्रायुधं, बहुगजतुरगपदाति-परिवृतः, वनं ययौ। तत्र च श्वपोषकैः अनवरतकृतकोलाहलैः, प्रधावद्भिः द्विगुणीक्रियमाणगमनोत्साहः, वनवराहान्, केसरिणः, अनेकविधकुरङ्गांश्च सहस्रशो जघान। अन्यांश्च जीवत एव जग्राह।

समारूढे च मध्यम् अह्नः सवितरि, समुद्गतस्वेदतया नवपल्लवेन निवार्यमाणातपः, सह राजपुत्रैः 'एवं मृगपतिः, एवं वराहः, एवं हरिणः,' इति तमेव मृगयावृत्तान्तम् उच्चारयन् स्वभवनमाजगाम।

अवतीर्य च तुरङ्गमात्, अपनीय च अशेषं तुरङ्गाधिरोहणोचितं वेशपरिग्रहं मुहूर्तं विशश्राम। विश्रम्य च मणिरजतकनककलश-सनाथाम्, अन्तर्विन्यस्तकाञ्चनपीठां स्नानभूमिमगात्। निर्वर्तिता-भिषेकव्यापारः, कृतदेवतार्चनः मात्रा विलासवत्या प्रेषितानि विविधानि आभरणानि वासांसि च पर्यधत्त। तदनु आहारमण्डपम् अगच्छत्। तत्र च समीपोपविष्टेन 'इदम् अस्मै दीयताम्' 'इदम् अस्मै दीयताम्' इति तद्गुणोपवर्णनपरेण वैशम्पायनेन राजपुत्रलोकेन च सह आहारविधिमकरोत्। गृहीतताम्बूलश्च मुहूर्तमिव स्थित्वा इन्द्रायुधसमीपमगमत्। तत्र च सत्यपि पार्श्वपरिवर्तिनि परिजने, स्वयमेव इन्द्रायुधस्य पुरो यवसम् आकीर्य, निर्गत्य राजभवन-मयासीत्। तेनैव क्रमेण अवलोक्य राजानम् आगत्य स्वभवनं निशाम् अनैषीत्।

* * *

## १२ पत्रलेखा

अपरेद्युश्च प्रभातसमये एव चन्द्रापीडः क्वणितमणिनूपुराकुल-चरणयुगलया कन्यकया अनुगम्यमानं कञ्चुकिनम् आयान्तमपश्यत्। समुपसृत्य क्षितितलनिहितदक्षिणकरः कञ्चुकी विज्ञापयामास।

"कुमार, महादेवी विलासवती समाज्ञापयति 'इयं खलु कन्यका महाराजेन पूर्वं कुलूतराजधानीमवजित्य, कुलूतेश्वरदुहिता पत्रलेखाभिधाना, बालिका सती बन्दीजनेन सह आनीय अन्तःपुरपरिचारिकामध्यम् उपनीता। सा मया विगतनाथा राजदुहिता इति दुहितृनिर्विशेषम् इयन्तं कालम् उपलालिता संवर्धिता च। तद् इयम् इदानीम् उचिता भवतः ताम्बूलकरङ्कवाहिनी इति कृत्वा मया प्रेषिता। न च अस्याम् आयुष्मता परिजनसामान्यदर्शिना भवितव्यम्। बालेव लालनीया। सुहृदिव सर्वविश्रम्भेषु अभ्यन्तरीकरणीया। स्वसुतायामिव हृदयमस्यामस्ति मे। नियतम् इयम् स्वयमेव अतिविनीततया कतिपयैः एव दिवसैः कुमारम् आराधयिष्यति। सर्वथा तथा कल्याणिना भवितव्यं, यथा इयम् अतिचिरम् उचिता परिचारिका ते भवति।"

इत्यभिधाय विरतवचसं कञ्चुकिनं, कृतप्रणामां पत्रलेखां सुचिरमालोक्य चन्द्रापीडः 'यथा आज्ञापयति अम्बा' इति उक्त्वा प्रेषयामास। पत्रलेखा तु ततः प्रभृति न दिवा न रात्रौ, न सुप्तस्य न आसीनस्य, न उत्थितस्य न भ्रमतः, छायेव राजसूनोः पार्श्वं मुमोच। चन्द्रापीडस्यापि तस्यां दर्शनादारभ्य महती प्रीतिरासीत्। अभ्यधिकं च प्रतिदिनम् अस्याः प्रसादम् अकरोत्। आत्महृदयाद् अव्यतिरिक्तामिव च एनां सर्वविश्रम्भेषु अमन्यत।

* * *

## १३ शुकनासोपदेशः

एवं समतिक्रामत्सु दिवसेषु तारापीडो चन्द्रापीडस्य यौवराज्याभिषेके मतिं चकार। समुपस्थितयौवराज्याभिषेकं चन्द्रापीडं कदाचिद्-

दर्शनार्थमागतम्, आरूढविनयमपि विनीततरमिच्छन् शुकनासः प्रोवाच। "तात चन्द्रापीड, विदितवेदितव्यस्य, अधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति। केवलं तु निसर्गतः एव अतिगहनं तमो यौवनप्रभवम्, दारुणो लक्ष्मीमदः, अत्यन्ततीव्रो दर्पज्वरोष्मा इत्यतो विस्तरेणाभिधीयसे।

"गर्भेश्वरत्वम्, अभिनवयौवनत्वम्, अप्रतिमरूपत्वम्, अमानुषशक्तित्वं चेति महती इयं खलु अनर्थपरम्परा। सर्वाविनयानाम् एकैकमपि एषाम् आयतनं किमुत समवायः? यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः। भवादृशा एव भवन्ति भाजनानि उपदेशानाम्। अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखेनोपदेशाः। विरला हि राज्ञामुपदेष्टारः। प्रतिशब्दक इव राजवचनमनुगच्छति जनो भयात्। उद्दामदर्पाश्च ते उपदिश्यमाना न शृण्वन्ति। शृण्वन्तोऽपि च अवधीरयन्तः खेदयन्ति हितोपदेशदायिनो गुरून्।

"आलोकयतु तावत् कल्याणाभिनिवेशी लक्ष्मीमेव भवान् प्रथमम्। इयं हि पारिजातपल्लवेभ्यो रागम्, उच्चैःश्रवसः चञ्चलतां, कालकूटात् मोहनशक्तिं, मदिरायाः मदम्, इत्येतानि सहवासपरिचयवशाद्विरहविनोदचिह्नानि गृहीत्वा इव क्षीरसागराद् उद्गता। लब्धापि खलु दुःखेन परिपाल्यते। न परिचयं रक्षति। नाभिजनमीक्षते। न रूपमालोकयते। न कुलक्रमनुवर्तते। न शीलं पश्यति। न वैदग्ध्यं गणयति। न श्रुतमाकर्णयति। न धर्ममनुरुध्यते। न सत्यमनुबुध्यते। जनं गुणवन्तमपवित्रमिव न स्पृशति। उदारसत्त्वममङ्गलमिव न बहु मन्यते। शूरं कण्टकमिव परिहरति। दर्शयति च परस्परविरुद्धं चरितम्। तथा हि—संततम् ऊष्माणम् उपजनयन्त्यपि जाड्यमुपजनयति। उन्नतिमादधानापि नीचस्वभावतामाविष्करोति। अमृतसहोदरापि कटुविपाकेयम्। न हि तं पश्यामि योऽनया न विप्रलब्धः।

" एवं विधयाऽनया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः, सर्वाविनयाधिष्ठानतां च गच्छन्ति । तथा हि अभिषेकसमये एव एतेषां मङ्गलकलशजलैरिव प्रक्षाल्यन्ते दाक्षिण्यं क्षान्तिः सत्यवादिता च । मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः, न पूजयन्ति द्विजान्, न मानयन्ति मान्यान्, न अर्चयन्ति अर्चनीयान्, न अभ्युत्तिष्ठन्ति गुरून् ।

कुमार, एवम्प्राये राज्यतन्त्रेऽस्मिन् महामोहकारिणि च यौवने तथा प्रयतेथाः, यथा नोपहस्यसे जनैः, न निन्द्यसे साधुभिः, न धिक्क्रियसे गुरुभिः । कामं भवान् प्रकृत्यैव धीरः, पित्रा च महता प्रयत्नेन समारोपितसंस्कारः । तथापि भवद्गुणसन्तोषो मामेवं मुखरीकृतवान् । सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान्नवयौवराज्याभिषेकमङ्गलम् । कुलक्रमागतामुद्वह पूर्वपुरुषैः ऊढां धुरम् । अवनमय द्विषतां शिरांसि । उन्नमय बन्धुवर्गम् । अभिषेकानन्तरं च प्रारब्धदिग्विजयः परिभ्रमन् विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुन्धराम् । अयं च ते कालः प्रतापमारोपयितुम् । "

उपशान्तवचासि शुकनासे चन्द्रापीडस्ताभिरुपदेशवाग्भिः प्रक्षालित इव, अभिषिक्त इव, पवित्रीकृत इव, प्रीतहृदयो मुहूर्तमिव स्थित्वा स्वभवनमाजगाम ।

* * *

## १४ यौवराज्याभिषेकः

ततः कतिपयदिवसापगमे च तारापीडः स्वयमुत्क्षिप्तमङ्गलकलशः सह शुकनासेन पुण्येऽहनि, अनेकनरपतिसहस्रपरिवृतः, सर्वेभ्यस्तीर्थेभ्यः, सर्वाभ्यो नदीभ्यः सर्वेभ्यश्च सागरेभ्यः समाहृतेन,

सर्वौषधिभिः सर्वफलैः सर्वरत्नैश्च परिगृहीतेन, आनन्दबाष्पजलमिश्रेण मन्त्रपूतेन वारिणा सुतमभिषिषेच। अभिषेकसलिलार्द्रदेहं च तं लतेव पादपान्तरं निजपादपमुच्चत्यापि तारापीडं, तत्क्षणमेव सञ्चक्राम राज्यलक्ष्मीः।

अनन्तरम् अखिलान्तःपुरपरिवृतया च प्रेमार्द्रहृदयया विलासवत्या स्वयम् आ पादतलात् आमोदिना चन्द्रातपधवलेन चन्दनेनानुलिप्तमूर्तिः, अभिनवविकासितकुसुमकृतशेखरः, इन्दुधवलं दुकूलयुगलं वसानः, तत्कालप्रतिपन्नवेत्रदण्डेन पित्रा स्वयं पुरः प्रारब्धसमुत्सारणः, सभामण्डपमुपगम्य काञ्चनमयं, शशीव मेरुशृङ्गं, चन्द्रापीडः सिंहासनमारुरोह।

* * *

## १५ दिग्विजयः

आरूढस्य च अस्य कृतयथोचितसकलराजलोकसंमानस्य मुहूर्तं स्थित्वा दिग्विजयप्रयाणशंसी प्रस्थानदुन्दुभिर्दध्वान। येन ध्वनता बधिरीकृतानीव रवेण भुवनान्तराणि। ततो दुन्दुभिरवमाकर्ण्य जय जयेति च सर्वतः समुद्घुष्यमाणजयशब्दः सिंहासनात् सह द्विषतां श्रिया सञ्चचाल चन्द्रापीडः। समन्तात् ससम्भ्रमोत्थितैश्चानुगम्यमानो नरपतिसहस्रैरास्थानमण्डपान्निरगात्।

निर्गत्य च पूर्वारूढया पत्रलेखया समध्यासितां करेणुकामधिरुह्य, आतपत्रेण निवार्यमाणातपः निर्गन्तुमारेभे। विनिर्गतश्च अवनिभुजां चक्रवालैः प्रणम्यमानः, गन्धमादनेन अनुगम्यमानः, इन्द्रायुधेन सनाथीकृतपुरोभागः, शनैः शनैः प्रथममेव शातक्रतवीम् आशाम् अभिप्रतस्थे।

अथ उच्चलितस्य च अस्य स्वभवनात् उपपादितप्रस्थानमङ्गलः, धवलदुकूलवासाः, महता बलसमूहेन नरेन्द्रवृन्दैश्चानुगम्यमानः, धृतधवलातपत्रः द्वितीय इव युवराजः वैशंपायनः समीपमाजगाम। आगत्य च, रजनिकर इव रवेः, आसन्नवर्ती बभूव। अनन्तरम् इतश्चेतश्च 'निर्गतो युवराजः' इति समाकर्ण्य प्रधावतां बलानां भरेण तत्क्षणमाचकम्पे मेदिनी। क्षणेन च तुरगमयमिव महीतलम्, कुञ्जरमयमिव दिक्चक्रवालम्, आतपत्रमण्डलमिव अन्तरिक्षं, जयशब्दमयमिव त्रिभुवनमभवत्।

अथ आलोक्य तद् अपरिमाणं बलम् उपजातविस्मयः सर्वतो दत्तदृष्टिः वैशंपायनश्चन्द्रापीडमाबभाषे। "युवराज, किं न जितं देवेन महाराजाधिराजेन तारापीडेन यज्जेष्यसि? का दिशो न वशीकृता, या वशीकरिष्यसि? कानि दुर्गाणि न प्रसाधितानि, यानि प्रसाधयिष्यसि? कानि रत्नानि नोपार्जितानि, यानि उपार्जयिष्यसि? के वा न प्रणता राजानः? कैर्न घृष्टाः पादपीठे चूडामणयः? कैर्नोच्चारिता जयशब्दाः? तथा हि—पश्य पश्य यस्यां यस्यां दिशि विक्षिप्यते चक्षुः, तस्यां तस्यां रसातलमिव उद्गिरति, वसुधेव सूते, गगनमिव वर्षति, दिवस इव सृजति बलानि। अपरिमितबलभराक्रान्ता मन्ये स्मरति महाभारतसमरसंक्षोभस्य अद्य क्षितिः।"

एवं वदत एव तस्य, युवराजः समुच्छ्रितानेकतोरणां धवलपटमण्डपशतशोभिनीम् आवासभूमिमवाप। तस्यां चावतीर्य राजवत् सर्वाः क्रियाश्चकार। सर्वैश्च तैः समेत्य नरपतिभिरमात्यैश्च विविधाभिः कथाभिर्विनोद्यमानः तं दिवसम् अशेषम् अभिनवपितृवियोगजन्मना शोकावेगेन आयास्यमानहृदयः, दुःखेन अत्यवाहयत्। अतिवाहितदिवसश्च यामिनीमपि वैशंपायनेन सह कुर्वन्नालापं नात्युपजातनिद्रः प्रायेण जाग्रदेव निन्ये। प्रत्यूषे च उत्थाय सेनासमुदायेन

जर्जरयन् वसुन्धराम् आकम्पयन् गिरीन्, रिक्तीकुर्वन् सरांसि, चूर्णयन् काननानि, समीकुर्वन् विषमाणि प्रातिष्ठत।

शनैः शनैश्च स्वेच्छया परिभ्रमन्, नमयन् उन्नतान्, उन्नमयन् अवनतान्, आश्वासयन् भीतान्, रक्षन् शरणागतान्, उत्सादयन् कण्टकान्, अभिषिञ्चन् स्थानस्थानेषु राजपुत्रान्, समर्जयन् रत्नानि, प्रतीच्छन् उपायनानि, गृह्णन् करान्, आदिशन्, देशव्यवस्थां, स्थापयन् स्वचिह्नानि, लेखयन् शासनानि, पूजयन् अग्रजन्मनः, प्रणमन् मुनीन्, पालयन्नाश्रमान्, जनानुरागं प्रकाशयन्, विस्तारयन् गुणान्, प्रख्यापयन् सच्चरित्रं पृथिवीं विचचार।

प्रथमं प्राचीं, ततो दक्षिणां, ततः उदीचीं जिग्ये। वर्षत्रयेण च आत्मीकृताशेषद्वीपान्तरं सकलमेव बभ्राम महीमण्डलम्। ततः क्रमेण निर्जितसकलभुवनतलः, प्रदक्षिणीकृत्य वसुधां, परिभ्रमन्, कदाचित् कैलाससमीपचारिणां किरातानां सुवर्णपुरं नाम निवासस्थानं जित्वा जग्राह। तत्र च निखिलधरणितलपर्यटनखिन्नस्य निजबलस्य विश्रामहेतोः कतिपयान् दिवसानतिष्ठत्।

* * *

## १६ महाश्वेतादर्शनम्

एकदा तु तत्रस्थः एव चन्द्रापीडः इन्द्रायुधमारुह्य मृगयानिर्गतो विचरन् कानने शैलशिखरावतीर्णं यदृच्छया किन्नरमिथुनमद्राक्षीत्। अपूर्वदर्शनतया तु समुपजातकुतूहलः, कृतग्रहणाभिलाषः, तत्समीपमुपससर्प। अदृष्टपूर्वपुरुषदर्शनत्रासप्रधावितं च तत्पलायमानमनुसरन्, एकाकी निर्गत्य निजबलसमूहात् सुदूरमनुससार। 'अत्र गृह्यते, इदं गृहीतम् इदं गृहीतम्' इति रभसाकृष्टचेताः, महाजवतया तुरङ्गमस्य

मुहूर्तमात्रेण तस्मात् प्रदेशात् पञ्चदशयोजनमात्रमध्वानं जगाम। तच्च किन्नरमिथुनम्, आलोकयतः एव अस्य, अचलतुङ्गशिखरमारुरोह।

आरूढे व तस्मिन् शनैः शनैः तदनुसारिणीं निवर्त्य दृष्टिं विधृततुरङ्गः चन्द्रापीडः तस्मिन् काले समुपारूढश्रमस्वेदार्द्रशरीरम् इन्द्रायुधम् आत्मानं च अवलोक्य, क्षणमिव विचार्य स्वयमेव विहस्य अचिन्तयत्।

" किमिति निरर्थकम् अयम् आत्मा मया शिशुना इव आयासितः? किमनेन गृहीतेन अगृहीतेन वा किन्नरयुगलेन प्रयोजनम्? यदि गृहीतमिदं ततः किम्? अथ न गृहीतं ततोऽपि किम्? अहो मे मूर्खतायाः प्रकारः! अहो बालिशचरितेषु आसक्तिः! गुर्वर्थः प्रारब्धो न परिसमाप्तः। विजिगीषुव्यापारप्रयत्नो न सिद्धः। 'कस्माच्च मया निष्प्रयोजनम् इदम् अनुसृतम् अश्वमुखद्वयम्' इति विचार्यमाणे यत्सत्यम् आत्मा एव मे परः इव हासमुपजनयति। न जाने कियता अध्वना विच्छिन्नम् इत बलम् अनुयायि मे। न च आगच्छता मया तुरगवेगवशात् किन्नरमिथुने बद्धदृष्टिना अस्मिन अविरलतरुशतशाखागुल्मलतासन्तानगहने महावने पन्था निरूपितः, येन प्रतिनिवृत्य यास्यामि। न च अस्मिन् प्रदेशे प्रयत्नेनापि मर्त्यधर्मा कश्चिदासाद्यते, यः सुवर्णपुरगामिनं पन्थानम् उपदेक्ष्यति। तदिदानीं प्रतिनिवृत्य दक्षिणमाशां केवलम् अङ्गीकृत्य गन्तव्यम्। **आत्मकृतानां हि दोषाणां नियतमनुभवितव्यं फलम् आत्मनैव** " इत्यवधार्य तुरङ्गमं व्यावर्तयामास।

व्यावर्तिततुरङ्गश्च पुनश्चिन्तितवान्। "अयं भगवान् भानुः अधुना नभस्तलमध्यम् अलङ्करोति। परिश्रान्तश्चायम् इन्द्रायुधः। तदेनं तावत् कस्मिंश्चित् सरसि स्नातपीतोदकम् अपनीतश्रमं कृत्वा, स्वयं

च सलिलं पीत्वा, कस्यचित् तरोरधः छायायां मुहूर्तमात्रं विश्रम्य ततो गमिष्यामि" इति चिन्तयित्वा सलिलमन्विष्यन् मुहुर्मुहुः इतस्ततो दत्तदृष्टिः पर्यटन्, कञ्चिदध्वानं गत्वा तस्यैव कैलासशिखरिणः पूर्वोत्तरदिग्भागे अत्यायतं तरुखण्डं ददर्श। तच्च सम्मुखादागतेन जलसंसर्गशिशिरेण, शीकरिणा, चंदनरससमस्पर्शेन आलिङ्ग्यमान इव जलतरङ्गमारुतेन, श्रोत्रहारिभिः कलहंसानां कोलाहलैः आहूयमान इव विवेश। प्रविश्य च तस्य तरुखण्डस्य मध्यभागे, मणिदर्पणमिव त्रैलोक्यलक्ष्म्याः, स्फटिकभूमिगृहमिव वसुन्धरादेव्याः, मुनिमनोभिरिव सज्जनगुणैरिव निर्मितम्, अतिमनोहरम्, आल्हादनं दृष्टेः, अच्छोदं नाम सरो दृष्टवान्।

आलोकमात्रेणैव अपगतश्रमः, भूयस्तत्र दत्तदृष्टिः मनस्येवमकरोत्। "अहो निष्फलमपि मे तुरगमुखमिथुनानुसरणम्, एतदालोकयतः सरः सफलतामुपगतम्। अद्य परिसमाप्तम् ईक्षणयुगलस्य द्रष्टव्यदर्शनफलम्। आलोकितः खलु रमणीयानामन्तः। दृष्टः आल्हादनीयानामवधिः। इदं सरःसलिलं खलु अमृतमिव सर्वेन्द्रियाल्हादनसमर्थम्। अतिविमलतया चक्षुषः प्रीतिमुपजनयति। शिशिरतया स्पर्शसुखमुपाहरति। कमलसुगन्धितया घ्राणम् आप्याययति। हंसमुखरतया श्रुतिमानन्दयति। स्वादुतया रसनामाल्हादयति। नियतं च अस्यैव दर्शनतृष्णया न परित्यजति भगवान् कैलासनिवासव्यसनम् उमापतिः।"

इति विचारयन्नेव तस्य दक्षिणं तीरमासाद्य तुरगादवततार। अवतीर्य च, पीतसलिलस्य इन्द्रायुधस्य अग्रतः कतिचित् सरस्तीरप्ररूढदूर्वाप्रवालकवलान् क्षिप्त्वा, स्वयमपि सलिलमवततार। ततश्च प्रक्षालितकरचरणयुगलः चातक इव कृत्वा जलमयमाहारं, लतामण्डपशिलातले निषसाद। मुहूर्तं विश्रान्तश्च तस्य सरसः उत्तरे तीरप्रदेशे समुच्चरन्तम्, उदग्रीवेण इन्द्रायुधेन प्रथममाकर्णितं, श्रुतिसुभगम्

अमानुषं गीतशब्दमशृणोत् । कुतूहलवशाच्च गीतध्वनिप्रभवजिज्ञासया कृतगमनबुद्धिः, इन्द्रायुधमारुह्य, वनहारिणैरुपदिश्यमानवर्त्मा उद्दिश्य तं गीतध्वनिमभिप्रतस्थे । क्रमेण च गत्वा तं प्रदेशं सर्वतो मरकतहरितैः पादपैः परिवृतं, भगवतः शूलपाणेः शून्यं सिद्धायतनमपश्यत् ।

तच्च प्रविश्य अद्राक्षीत् अशेषत्रिभुवनवन्दितचरणं, चराचरगुरुं चतुर्मुखं भगवन्तं त्र्यम्बकम् । तस्य च दक्षिणां मूर्तिमाश्रित्य अभिमुखीम् आसीनां, भस्मना कृतललाटपट्टिकाम्, उत्सङ्गगतां वीणामास्फालयन्तीं, प्रत्यक्षामिव गन्धर्वविद्यां, निरहङ्काराम् अमानुषाकृतिं, दिव्यत्वात् अपरिज्ञायमानवयःप्रमाणामपि अष्टादशवर्षदेशीयामिव उपलक्ष्यमाणां कन्यकां ददर्श ।

ततोऽवतीर्य, तरुशाखायां बद्ध्वा तुरङ्गम्, उपसृत्य भगवते भक्त्या प्रणनाम त्रिलोचनाय । उदपादि च अस्य तस्याः कन्यकायाः रूपसंपदा कान्त्या प्रशान्त्या च आविर्भूतविस्मयस्य मनसि । "अहो जगति **जन्तूनाम् असमर्थितोपनतानि आपतन्ति वृत्तान्तान्तराणि** । तथा हि— मया मृगयायां यदृच्छया निरर्थकमनुबध्नता तुरगमुखमिथुनं, मानुषदुर्लभदर्शना दिव्यकन्यकेयम् आलोकिता । तद्यदि मे दर्शनपथान्नापयाति ततः 'का त्वं, किमभिधाना वा, किमर्थं वा प्रथमे वयसि प्रतिपन्नं व्रतम्' इति सर्वमेवैतदेनामुपसृत्य पृच्छामि ।" इत्यवधार्य तस्यामेव स्फटिकमण्डपिकायाम् अन्यतमं स्तम्भमाश्रित्य समुपविष्टो गीतसमाप्त्यवसरं प्रतीक्षमाणः तस्थौ ।

अथ गीतावसाने मूकीभूतवीणा सा कन्यका समुत्थाय कृतहरप्रणामा परिवृत्य चन्द्रापीडम् आबभाषे । 'स्वागतमतिथये । कथमिमां भूमिम् अनुप्राप्तो महाभागः? आगम्यताम् । अनुभूयताम् अतिथिसत्कारः' इति । एवमुक्तस्तु तया सम्भाषणमात्रेणैव अनु-

गृहीतमात्मानं मन्यमानः, उत्थाय भक्त्या कृतप्रणामः, 'भगवति, यथाज्ञापयसि' इत्यभिधाय दर्शितविनयः शिष्य इव तां व्रजन्तीम् अनुवव्राज। पदशतमात्रामिव गत्वा तमालतरुभिः अन्धकारितपुरोभागां गुहामद्राक्षीत्। तस्याश्च द्वारि शिलातले समुपविष्टः, पर्णपुटेन निर्झरात् आगृहीतम् अर्घ्यसलिलम् आदाय तां कन्यकां समुपस्थितामब्रवीत्। 'कृतम् अतिप्रसादेन। भगवति, प्रसीद। विमुच्यतामयम् अत्यादरः। त्वदीयमालोकनमपि सर्वपापप्रशमनम् अघमर्षणमिव पवित्रीकरणाय अलम्' इति। अनुबध्यमानश्च तया तां सर्वामातिथिसपर्यां सप्रश्रयं प्रतिजग्राह। कृतातिथ्यया च तया परिपृष्टो दिग्विजयादारभ्य किन्नरमिथुनानुसरणप्रसङ्गेन आगमनप्रकारमात्मनः सर्वमाचचक्षे।

ततः निर्वर्तितस्नानविधिः, अमृतरसस्वादूनि उपभुज्य फलानि, परिसमापिताहारां, शिलातले विश्रब्धमुपविष्टां तां चन्द्रापीडः सविनयमब्रवीत्।

"भगवति, त्वत्प्रसादप्राप्तिप्रोत्साहितेन कुतूहलेन आकुलीक्रियमाणो मानुषतासुलभो लघिमा बलादनिच्छन्तमपि मां प्रश्नकर्मणि नियोजयति। स्वल्पापि एकदेशावस्थानकालकला परिचयमुत्पादयति। तद् यदि कथनं नातिखेदकरमिव, ततः कथनेन आत्मानम् अनुग्राह्यमिच्छामि। अतिमहत् खलु भवद्दर्शनात्प्रभृति मे कौतुकमस्मिन् विषये। कतरत् ऋषीणां, गन्धर्वाणां, गुह्यकानाम् अप्सरसां वा कुलमनुगृहीतं भगवत्या जन्मना? किमर्थं वा अस्मिन् कुसुमसुकुमारे नवे वयसि व्रतग्रहणम्? क्व इदं वयः? क्व इदं तपः? क्व चायं लावण्यातिशयः? तद् अद्भुतमिव मे प्रतिभाति। न इदम् अस्माभिः अन्यत्र दृष्टश्रुतपूर्वम्। अपनयतु नः कौतुकम्। आवेदयतु भवती सर्वमिदम्।"

इत्येवम् अभिहिता सा किमपि अन्तर्ध्यायन्ती तूष्णीं मुहूर्तमिव स्थित्वा निःश्वस्य अश्रुभिः आमीलितलोचना निःशब्दं रोदितुमारेभे। तां च प्ररुदितां दृष्ट्वा चन्द्रापीडः तत्क्षणमचिन्तयत्।" अहो दुर्निवारता व्यसनोपनिपातानाम्! यद् ईदृशीमपि दिव्याकृतिम् आत्मीयां कुर्वन्ति। इदमपरम् अधिकतरम् उपजनितम् अतिमहत् मनसि मे कौतुकम् अस्याः बाष्पसलिलपातेन" इति संवर्धितकुतूहलश्च, शोकस्मरणहेतुताम् उपगतम् अपराधिनमिव आत्मानम् अवगच्छन्, उत्थाय प्रस्रवणात् अञ्जलिना मुखप्रक्षालनोदकम् उपनिन्ये। सा तु तदनुरोधात् प्रक्षाल्य लोचने, वल्कलोपान्तेन वदनमपमृज्य शनैः प्रत्यवादीत्—

"राजपुत्र, किमनेन मम मन्दभाग्यायाः पापायाः जन्मनः प्रभृति वैराग्यवृत्तान्तेन अश्रवणीयेन श्रुतेन? तथापि यदि महत् कुतूहलं तत् कथयामि। श्रूयताम्।

"एतत् प्रायेण भवतः श्रुतिविषयमापतितमेव यथा विबुधसद्मानि अप्सरसो नाम कन्यकाः सन्ति इति। तासां सोमामृताग्निपवनादिसम्भवानि चतुर्दश कुलानि। यत् सोमसम्भूतम् अप्सरसां कुलं, तस्मिन् अहं समुत्पन्ना। महाश्वेता इति मदीयं नाम।" इत्येवम् आत्मनः कुलवृत्तान्तात् आरभ्य पुण्डरीकवियोगपर्यन्तं सर्वमेव निजवृत्तान्तम् आवेदयन्त्या एव तस्याः चेतनां जहार मूर्च्छा। तां च ससंभ्रमप्रसारितकरः चन्द्रापीडः विधृतवान्। अश्रुजलार्द्रेण च तदीयेन एव उत्तरीयवल्कलप्रान्तेन शनैः शनैः विजयन् संज्ञां ग्राहितवान्। उपजातकारुण्यश्च तामवादीत्।

'भगवति, मया पापेन तवायं शोकः पुनः अभिनवताम् उपनीतः। तद् अलम् अनया कथया। अहमपि असमर्थः श्रोतुम्'। इत्येवमुक्त्वा दीर्घम् उष्णं च निःश्वस्य सनिर्वेदमवादीत्।

"राजपुत्र, नूनं पापायाः मम भगवान् अन्तकोऽपि परिहरति

दर्शनम्। कुतश्च मे कठिनहृदयायाः शोकः? सर्वमिदम् अलीकम् अस्य दुरात्मनः शठहृदयस्य। किं वा परम् अतः कष्टतरम् आख्येयम् अन्यत् भविष्यति, यन्न शक्यते सोढुम् आख्यातुं वा। अहमिदम् उपरतकल्पं, परकीयमिव भारभूतम्, अप्रयोजनम् अकृतज्ञं च हत-शरीरं वहामि। प्रतिदिनम् अर्चयन्ती देवं त्र्यम्बकम् अस्यामेव गुहायां तरलिकया सह निवसामि। किं मया दृष्टया पृष्टया वा करोति महाभागः?" इत्युक्त्वा मुक्तकण्ठम् अतिचिरम् उच्चैः प्रारोदीत्। चन्द्रापीडस्तु प्रथममेव तस्याः रूपेण, विनयेन, दाक्षिण्येन, मधुरालापतया, निरभिमानतया, महानुभावत्वेन च उपारूढगौरवः आसीत्। तदानीं तु स स्ववृत्तान्तकथनेन तया आर्द्रीकृतहृदयः शनैः शनैः एनामभाषत।

"भगवति, क्लेशभीरुः अकृतज्ञः लोकः स्नेहसदृशं कर्म अनुष्ठातुमशक्तः, निष्फलेन अश्रुपातमात्रेण स्नेहमुपदर्शयन् रोदिति। त्वया तु कर्मणा एव सर्वमाचरन्त्या किमिव न प्रेमोचितम् आचेष्टितं, येन रोदिषि? विमुक्तानि ऐश्वर्यसुखानि। आयोजितः तपसि महति आत्मा। वनिताजनदुष्करम् अतिकष्टम् अङ्गीकृतम् अरण्यावस्थानम्।

"यदेतत् अनुमरणं नाम तदातिनिष्फलम्। मौर्ख्यस्खलितमिदम्। अत्र हि विचार्यमाणे, स्वार्थ एव प्राणपरित्यागः अयम् असह्यशोकवेदनाप्रतीकारत्वात् आत्मनः। उपरतस्य तु न कमपि गुणमावहति। न परस्परसमागमनिमित्तम्। अन्यामेव स्वकर्मफलपरिपाकोपचिताम् असौ अवशो नीयते भूमिम्। असौ अपि आत्मघातिनः केवलम् एनसा संयुज्यते। जीवंस्तु जलाञ्जलिदानादिना बहूपकरोति उपरतस्य आत्मनश्च। स्मर तावत् प्रियाम् एकपत्नीं रतिं, भर्तरि मकरकेतौ हरनयनहुतभुजा दग्धेऽपि अविरहिताम् असुभिः, उत्तरां च पञ्चत्वम् अभिमन्यौ उपगतेऽपि धृतदेहाम्, दुःशलां च जयद्रथे अर्जुनेन

लोकान्तरमुपनीते अकृतप्राणपरित्यागाम् । अन्याश्च कन्यकाः भर्तृ-रहिताः श्रूयन्ते सहस्रशो विधृतजीविताः ।

"भगवत्या तु पुनः स्वयमेव समागमसरस्वती समाकर्णिता । निःसंशयं स महात्मा पुनः प्रत्युज्जीवनार्थमेव एनम् उत्क्षिप्य सुरलोकं नीतवान् । अचिन्त्यो हि महात्मनां प्रभावः । न च असम्भाव्यमिदम् अवगन्तव्यम् भगवत्या । चिरप्रवृत्तः एष पन्थाः । अर्जुनं बभ्रुवाहनेन समरशिरसि शरापहृतप्राणम् उलूपी सोच्छ्वासमकरोत् । सान्दीपनि-द्विजतनयम् अन्तकपुरात् अपहृत्य भगवान् वासुदेवः आनीतवान् । अत्रापि कथञ्चित् एकमेव भविष्यति । अतः नार्हसि अनिन्द्यम् आत्मानं निन्दितुम् । **आपतन्ति हि संसारपथमवतीर्णानाम् एते वृत्तान्ताः । धीरा हि तरन्त्यापदम् ।**"

एवं तां समाश्वास्य चन्द्रापीडः पुनः पप्रच्छ–'भगवति, सा तव परिचारिका वनवासव्यसनमित्रं तरलिका क्व गता?' इति । महाश्वेता अकथयत्– "महाभाग, यो मया पूर्वम् उपवर्णितः गन्धर्वाधिपतिः चित्ररथः, तस्यास्ति दुहितृरत्नं कादम्बरी इति नाम्ना । सा च मे जन्मनः प्रभृति परं प्रेमस्थानं, द्वितीयमिव हृदयं, बाल-मित्रम् । अमुना एव मे हतवृत्तान्तेन समुपजातशोका निश्चय-मकार्षीत् । 'नाहं कथञ्चिदपि सशोकायां महाश्वेतायाम् आत्मनः पाणिं ग्राहयिष्यामि । यदि कथञ्चिदपि माम् अनिच्छन्तीमपि बलात् तातः कदाचित् कस्मैचित् दातुमिच्छति तदा अहम् अनशनेन वा रज्ज्वा वा विषेण वा आत्मानम् उत्स्रक्ष्यामि' इति ।

"तदा आत्मदुहितुः कृतनिश्चयं निश्चलभाषितं श्रुत्वा चित्ररथः परं खेदमापन्नः मह्यं सन्दिष्टवान् 'महाश्वेते, कादम्बरीम् अनुनेतुं त्वमेव शरणम्' इति । ततः मया 'सखि कादम्बरि, किं दुःखितमपि जनम् अतितरां दुःखयसि? जीवन्तीम् इच्छसि चेत् मां तत् कुरु

गुरुवचनम् अवितथम्' इति सन्दिश्य तरलिका विसर्जिता।" इत्युक्त्वा तूष्णीम् अभवत्।

अत्रान्तरे भगवान् उदगात् तारकाराजः। क्रमेण च उद्गते शशाङ्कमण्डले चन्द्रापीडः सुप्ताम् आलोक्य महाश्वेतां पल्लवशयने शनैः समुपाविशत्। अस्यां वेलायां 'किं नु खलु मामन्तरेण चिन्तयति वैशंपायनः, किं वा वराकी पत्रलेखा, किं वा राजपुत्रलोकः' इति चिन्तयन्नेव निद्रां ययौ।

* * *

## १७ कादम्बरीचन्द्रापीडौ

अथ क्षीणायां क्षपायां प्रत्युषसि एव तरलिका गन्धर्वदारकेण केयूरकनाम्ना अनुगम्यमाना महाश्वेतायाः अन्तिकं प्रादुरासीत्। परिसमाप्तजपा तु महाश्वेता पप्रच्छ ताम्। 'किं त्वया दृष्टा प्रियसखी कादम्बरी कुशलिनी? करिष्यति वा तदस्मद्वचनम्?' इति। अथ सा तरलिका मधुरया गिरा व्यजिज्ञपत्। 'भर्तृदारिके, दृष्टा खलु मया भर्तृदारिका कादम्बरी सर्वतः कुशलिनी। विज्ञापिता च निखिलं सन्देशम्। आकर्ण्य च यत् तया प्रतिसन्दिष्टं तत् एष तयैव विसर्जितः तस्याः एव वीणावाहकः केयूरकः कथयिष्यति।'

विरतवचसि तस्यां केयूरकोऽब्रवीत्। 'भर्तृदारिके महाश्वेते, देवी कादम्बरी त्वां विज्ञापयति। यद् इयम् आगत्य माम् अवदत् तरलिका तत् कथय किमयं गुरुजनवचनानुरोधः? किमिदं मच्चित्तपरीक्षणम्? अपि च यत्र भर्तृविरहविधुरा प्रियसखी महत् कृच्छ्रम् अनुभवति तत्र अहं कथम् आत्मसुखार्थिनी पाणिं ग्राहयिष्यामि? त्वत्प्रेम्णा गुरुवचनम् अतिक्रान्तं मया' इत्युक्त्वा तूष्णीमभूत्।

महाश्वेता तु तच्छ्रुत्वा सुचिरं विचार्य 'गच्छ स्वयमेव अहम् आगत्य यथार्हम् आचरिष्यामि' इति उक्त्वा केयूरकं प्राहिणोत्।

गते च केयूरके महाश्वेता चन्द्रापीडम् उवाच। "राजपुत्र, रमणीयो हेमकूटः। चित्रा च चित्ररथराजधानी। सरलहृदया महानुभावा च कादम्बरी। यदि नातिखेदकरमिव गमनं कलयसि, नावसीदति वा गुरु प्रयोजनम्, नार्हसि निष्फलां कर्तुम् अभ्यर्थनाम् इमाम्। इतः मयैव सह गत्वा हेमकूटं, तत्र दृष्ट्वा कादम्बरीम्, अपनीय तस्याः मोहविलसितम्, एकम् अहः विश्रम्य, श्वोभूते प्रत्यागमिष्यसि। **दुःखितमपि जनं रमयन्ति सज्जनसमागमाः।**"

इत्युक्तवतीं च एनां चन्द्रापीडोऽब्रवीत् 'भगवति, दर्शनात् प्रभृति परवान् अयं जनः कर्तव्येषु यथेष्टम् अशंकिततया नियुज्यताम्।' इत्यभिधाय तया सह एव उदचलत्।

क्रमेण च गत्वा हेमकूटम् आसाद्य गन्धर्वराजकुलं, समतीत्य च काञ्चनतोरणानि सप्तकक्षान्तराणि कादम्बरीभवनम् अवाप। तत्र च मध्यभागे पर्यङ्के अवस्थितां, कन्याजनेन परिवृतां, समीपे सम्मुखोपविष्टं 'कोऽसौ, कीदृशम् अस्य रूपं, कथं च अस्य महाश्वेतया सह परिचयः' इति मुहुर्मुहुः चन्द्रापीडसम्बद्धं केयूरकं पृच्छन्तीं कादम्बरीं ददर्श। तस्य तु दर्शनेनैव उल्ललास हृदयम्। आसीच्च अस्य मनसि। शेषेन्द्रियाणि अपि मे वेधसा किमिति लोचनमयान्येव न कृतानि? एवं चिन्तयत एव अस्य, तस्या नयनयुगले निपपात चक्षुः। तदा तस्या अपि, नूनम् अयं सः केयूरकेण आवेदितः इति चिन्तयन्त्याः चक्षुः तस्मिन् सुचिरं पपात।

कादम्बरी तु महाश्वेतां स्नेहनिर्भरं चिरदर्शनजातोत्कण्ठां कण्ठे जग्राह। ततः महाश्वेता तामवादीत्। "सखि कादम्बरि, भारते

वर्षे राजा तारापीडो नाम । तस्य अयं चन्द्रापीडो नाम सूनुः। दिग्विजयप्रसङ्गेन अनुगतो भूमिम् इमाम् । एष च दर्शनात् प्रभृति प्रकृत्या मे निष्कारणबन्धुतां गतः । तत् विमुच्य लज्जाम्, अनुपजातपरिचयः इति अपहाय शङ्कां, यथा मयि, तथा अत्रापि वर्तितव्यम् । एष ते मित्रं च बान्धवश्च" इति आवेदिते तया चन्द्रापीडः प्रणामम् अकरोत् ।

कादम्बरी तु सविभ्रमकृतप्रणामा, महाश्वेतया सह पर्यङ्के निषसाद । ससम्भ्रमपरिजनोपनीतायां पीठिकायां चन्द्रापीडः समुपाविशत् । ततः महाश्वेता कादम्बरीम् अनामयं पप्रच्छ। मुहूर्तापगमे च ताम् अभाषत। 'सखि कादम्बरि, सर्वाभिः अस्माभिः चन्द्रापीडः आराधनीयः ।'

अत्रान्तरे च आगत्य कञ्चुकी महाश्वेताम् अवोचत् ।'आयुष्मति, देवश्चित्ररथः देवी च मदिरा त्वां द्रष्टुम् आह्वयतः' इति । एवम् अभिहिता च गन्तुकामा महाश्वेता 'सखि, चन्द्रापीडः त्वत्प्रासादसमीपवर्तिनि क्रीडापर्वतकमणिवेश्मनि आस्ताम्' इत्यभिधाय गन्धर्वराजं द्रष्टुं ययौ ।

चन्द्रापीडोऽपि तया सहैव निर्गत्य विनोदनार्थं गीतकलाकुशलाभिः कन्यकाभिः अनुगम्यमानः, केयूरकेण उपदिश्यमानमार्गः क्रीडापर्वतकमणिमन्दिरम् अगात्। तत्र च निर्वर्तितस्नानविधिः सर्वम् आहारादिकम् अहःकर्म चक्रे ।

अथ कृताहारश्च मरकतशिलातले समुपविष्टः, दृष्टवान् आगच्छन्तीं मदलेखाम्। सा तु चन्द्रापीडस्य अन्तिकम् आगत्य उवाच। 'कुमार, स्वयं गृहीतहृदयाय किं दीयते ? तथापि इमं हारमादाय भर्तृदारिका कादम्बरी त्वत्सकाशं मां प्रेषितवती। प्रणयितां च अनेन व्यपदेशेन दर्शयति कादम्बरी, न विभवम् । अयं शेषनामा

हारः कौस्तुभमणिम् अपि गुणेन अतिशेते' इत्युक्त्वा च तं तस्य वक्षःस्थले बबन्ध।

चन्द्रापीडस्तु विस्मयमानः प्रत्यवादीत्। 'मदलेखे, किमुच्यते? निपुणासि। जानासि ग्राहयितुम्। अतिदाक्षिणायाः खलु देव्याः कादम्बर्याः गुणाः न कञ्चित् न दासीकुर्वन्ति।' इत्युक्त्वा च कादम्बरीसम्बद्धाभिः एव कथाभिः सुचिरं स्थित्वा विसर्जयाम्बभूव मदलेखाम्।

ततः अचिरादेव उदगात् श्वेतभानुः। चन्द्रापीडः मुक्ताशिलापट्टं चन्द्रशीतलम् अधिशिश्ये। महाश्वेतायाश्च सुजनतां, कादम्बर्याश्च निष्कारणवत्सलतां, गन्धर्वराजलोकस्य च रम्यतां मनसा भावयन् क्षणादिव क्षणदां क्षपितवान्।

अथ उदिते सवितरि चन्द्रापीडः शिलातलादुत्थाय प्रक्षालितमुख-कमलः, महाश्वेतया सह अवतिष्ठमानां कादम्बरीम् आलोकयितुम् आजगाम। स्थित्वा च तत्र कञ्चित् कालं महाश्वेताया वदनं विलोक्य मन्दस्मितम् अकरोत्। असौ तु तावता एव विदिताभिप्राया कादम्बरीम् अब्रवीत्। 'सखि, भवत्याः गुणैः चन्द्रापीडः चन्द्रकान्त इव चन्द्रमयूखैः आर्द्रीकृतः न शक्नोति वक्तुम्। जिगमिषति खलु कुमारः। पृष्ठतः दुःखम् अविदितवृत्तान्तं राजचक्रम् आस्ते। अपि च युवयोः दूरस्थितयोः अपि स्थिता इयम् इदानीं कुमुदिनी–कुमुदनाथयोः इव प्रीतिः आ प्रलयात्। अतः अभ्यनुजानातु भवती' इति।

अथ कादम्बरी 'सखि महाश्वेते, स्वाधीनोऽयं जनः कुमारस्य, क इव अत्र अनुरोधः?' इति अभिधाय, गन्धर्वकुमारान् आहूय 'प्रापयत कुमारं स्वां भूमिं' इति आदिदेश। चन्द्रापीडोऽपि उत्थाय प्रणम्य 'देवि, किं ब्रवीमि? **बहुभाषिणि न श्रद्दधाति लोकः।** स्मर्तव्योऽस्मि परिजनकथासु' इत्यभिधाय केयूरकेण उपनीतं वाजिनम् आरुह्य, कादम्बर्या प्रेमस्निग्धेन चक्षुषा गृह्यमाणो हेमकूटात् प्रवृत्तो गन्तुम्।

* * *

## १८ शेषहारविस्मृतिः

अथ चन्द्रापीडः क्रमेण च प्राप्य महाश्वेताश्रमम्, अच्छोदसरस्तीरे सन्निविष्टम् इन्द्रायुधखुरपुटानुसारेण एव आगतम् आत्मस्कन्धावारम् अपश्यन्। सकुतूहलेन, सानन्देन, सविस्मयेन च, स्कन्धावारवर्तिना जनेन प्रणम्यमानः स्वभवनं विवेश। सम्मानितराजलोकश्च वैशंपायनेन पत्रलेखया च सह, 'एवं महाश्वेता, एवं कादम्बरी, एवं मदलेखा' इति अनया एव कथया प्रायो दिवसमनैषीत्। कादम्बरीं च चेतसा चिन्तयतः एव सा जगाम रात्रिः।

अपरेद्युश्च समुत्थिते भगवति रवौ सहसा एव प्रतीहारेण सह प्रविशन्तं केयूरकं ददर्श। दूरादेव च क्षितितलस्पर्शिना मौलिना कृतपादपतनम् 'एहि एहि' इत्युक्त्वा तम् आलिलिङ्ग गाढम्। उपावेशयत् च एनम् आत्मनः समीपे एव। पप्रच्छ च–'केयूरक, कथय, कुशलिनी देवी कादम्बरी भगवती महाश्वेता च?' इति। असौ तु तेन राजसूनोः स्मितेनैव स्नापित इव सद्य एव अपगताध्वखेदः प्रणम्य अवोचत्।

'अद्य कुशलिनी याम् एवं देवः पृच्छति। सन्दिष्टं च तव महाश्वेतया। बलवदस्वस्थशरीरा कादम्बरी स्मरति च स्मेराननं त्वाम्। अपि च भवन्तं द्रष्टुम् इच्छति मे हृदयम्। एष देवस्य शयनीये विस्मृतः शेषो हारः प्रहितः' इत्युक्त्वा तं चामरग्राहिण्याः करे शेषं समर्पितवान्।

अथ चन्द्रापीडः तमेव कण्ठे हारमकरोत्। आगृहीतताम्बूलश्च मुहूर्तादिव उत्थाय जिगमिषुः 'अश्वः अश्वः' इति वदन् भवनात् निर्ययौ। त्वरिततुरगपरिचारकोपनीतं च इन्द्रायुधम् आरुह्य, पश्चात् आरोप्य पत्रलेखां, स्कन्धावारे स्थापयित्वा वैशंपायनं केयूरकेण अनुगम्यमानः हेमकूटं ययौ। आसाद्य च कादम्बरीभवनद्वारम् अवततार तुरगात्।

पत्रलेखया च अनुगम्यमानः हिमगृहं गत्वा कुसुमशयने समुपविष्टां कादम्बरीं पूर्ववदेव दर्शितविनयः प्रणनाम । अथ केयूरकोऽब्रवीत् । 'देवि, देवस्य चन्द्रापीडस्य पत्रलेखा नाम ताम्बूलकरङ्कवाहिनी इयम्' इति अभिधाय पत्रलेखाम् अदर्शयत् । अथ कादम्बरी दृष्ट्वा ताम् 'अहो मानुषीषु पक्षपातः प्रजापतेः' इति चिन्तयाम्बभूव । कृतप्रणामां च ताम् 'एहि एहि' इत्यभिधाय आत्मनः समीपे पृष्ठतः समुपावेशयत् । चन्द्रापीडदर्शनेनैव आश्वासिता, शालीनतां च अवलम्बमाना तूष्णीमेव आसीत् । केवलं स्मितालोकम् अकरोत् । चन्द्रापीडस्तु महाश्वेतया सह चतुराभिः कथाभिः महान्तं कालं स्थित्वा महता यत्नेन मोचयित्वा आत्मानं स्कन्धावारगमनाय कादम्बरीभवनात् निर्ययौ ।

निर्गतं च तुरङ्गम् आरुरुक्षन्तं पश्चात् आगत्य केयूरकोऽभिहितवान् । 'देवी कादम्बरी प्रथमदर्शनजनितप्रीतिः पत्रलेखां निवर्त्यमानाम् इच्छति, सा च पश्चात् यास्यति इति । श्रुत्वा देवः प्रमाणम् ।' इत्याकर्ण्य चन्द्रापीडः 'केयूरक, धन्या स्पृहणीया च पत्रलेखा, याम् एवम् अनुबध्नाति दुर्लभो देवीप्रसादः । प्रवेश्यताम्' इत्यभिधाय पुनः स्कन्धावारमेव आजगाम ।

* * *

## १९ तारापीडपत्रम्

अथ चन्द्रापीडः स्कन्धावारं प्रविशन्नेव पितुः समीपात् आगतम् आलेखहारकम् अद्राक्षीत् । धृततुरङ्गमश्च दूरादेव अपृच्छत् । 'अङ्ग, कच्चित् कुशली तातः सह अम्बया ?' अथ असौ उपसृत्य प्रणामानन्तरं लेखम् अर्पयाम्बभूव । युवराजस्तु शिरसि कृत्वा तं च स्वयमेव उन्मुच्य क्रमशः पपाठ ।

स्वस्ति । उज्जयिनीतः महाराजाधिराजः देवः तारापीडः सर्वसम्पदाम् आयतनं चन्द्रापीडम् उत्तमाङ्गे चुम्बन् नन्दयति ।

कुशलिन्यः प्रजाः । किन्तु कियानपि कालो भवतो दृष्टस्य । बलवदुत्कण्ठितं नो हृदयम् । देवी च म्लानिम् उपनीता । अतः लेखनवाचनविरतिरेव प्रयाणकालतां नेतव्या इति ।

अथ चन्द्रापीडः 'यथाज्ञापयति तातः' इत्युक्त्वा तथैव च तुरगाधिरूढः प्रयाणपटहम् अवादयत् । समीपे स्थितं च बलाधिकृतं मेघनादम् आदिदेश । 'भवता पत्रलेखया सह आगन्तव्यम् । केयूरकः ताम् आदाय एतावतीं भूमिम् आगमिष्यति । केयूरकमुखेन विज्ञाप्या देवी कादम्बरी । सर्वथा गतोऽस्मि पितुरादेशात् उज्जयिनीम् । प्रसङ्गतो सज्जनकथाकीर्तनेषु स्मर्तव्यः खलु चन्द्रापीडः । मा एवं मंस्थाः यथा जीवन् पुनः देवीचरणारविन्दवन्दनानन्दं अननुभूय स्थास्यति चन्द्रापीडः' इति ।

एवम् आदिश्य तं, शनैः शनैः आगन्तव्यम् इत्युक्त्वा वैशंपायनं स्कन्धावारभारे न्ययुङ्क्त । स्वयमपि च लेखहारकम् उज्जयिनीवार्तां पृच्छन् प्रतस्थे ।

* * *

## २० जरद्द्रविडधार्मिकः

अथ चन्द्रापीडः उज्जयिनीमार्गे महान्तं रक्तध्वजं दूरत एव ददर्श । तदभिमुखश्च कञ्चिदध्वानं गत्वा चण्डिकायतनम् अपश्यत् । ततः अवतीर्य तुरगात्, प्रविश्य भक्तिप्रवणेन चेतसा चण्डिकां प्रणनाम । कृतप्रदक्षिणश्च इतस्ततः परिभ्रमन्, उच्चैः आरटन्तम् आक्रोशन्तं च कुपितं द्रविडधार्मिकम् एकदेशे ददर्श । दृष्ट्वा तं कादम्बरी

विरहदूयमानोऽपि सुचिरं जहास। क्रमेण जन्मभूमिं, जातिं, विद्यां च कलत्रम्, अपत्यानि, प्रव्रज्यायाश्च कारणं स्वयमेव तं पप्रच्छ। पृष्टश्च असौ अवर्णयन् आत्मानम्। अतीतस्वशौर्यरूपविभववर्णन-वाचालेन तेन सुतराम् अरज्यत राजपुत्रः। अस्तम् उपगते च सप्तसप्तौ, पीतोदकस्य संयतस्य च इन्द्रायुधस्य पुरः शयनीयम् अगात्। किन्तु अनुपजातनिद्र एव ताम् अनयत् निशाम्।

उषसि च उत्थाय, तस्य द्रविडधार्मिकस्य इच्छया निसृष्टैः धनविसरैः पूरयित्वा मनोरथम् अभिरमणीयेषु प्रदेशेषु निवसन् अल्पैः एव अहोभिः उज्जयिनीम् आजगाम।

* * *

## २१ उज्जयिनीप्रत्यागमनम्

ततः आकस्मिकागमनप्रहृष्टसम्भ्रान्तानां पौराणां नमस्काराञ्जलि-सहस्राणि प्रतीच्छन् अतर्कित एव चन्द्रापीडो विवेश नगरम्। अहमहमिकया च प्रधावतात् परिजनात् एव 'द्वारि चन्द्रापीडो वर्तते' इति उपलभ्य पिता निर्भरानन्देन चरणाभ्यामेव प्रत्युज्ज-गाम। अथ तेन प्रसारितभुजेन 'एहि एहि' इति आहूय कृत-नमस्कारः करे गृहीत्वा विलासवतीभवनम् अनीयत। तत्र दिग्वि-जयसबम्द्धाभिः एव कथाभिः कञ्चित् कालं स्थित्वा सर्वाः स्नाना-दिकाः क्रियाः निरवर्तयत्। अपराह्ने निजमेव भवनम् अयासीत्। तत्र कादम्बर्या विना अवन्तीनगरं शून्यं मन्यमानः, तद्वार्ता-श्रवणोत्सुकः पत्रलेखागमनं प्रत्यपालयत्।

ततः कतिपयदिवसापगमे मेघनादः पत्रलेखाम् आदाय आग-च्छत्। कृतनमस्कारां समुपविष्टां च तामब्रवीत्। 'पत्रलेखे, कथय

तत्रभवत्याः महाश्वेतायाः देव्या कादम्बर्याश्च कुशलम्। आगते मयि का वा गोष्ठयः तत्र समभवन्।' साऽब्रवीत्। "केयूरकमुखात् देवस्य गमनं निशम्य कादम्बरी वज्राहतेव विक्लवा माम् अवदत्। 'पत्रलेखे, देवेन एतदवस्थां देवीं दूरीकुर्वता किमिदम् आपन्न-वत्सलायाः स्वप्रकृतेः अनुरूपं कृतम्?' इति एवम्वादिनीं ताम् अहमवोचम्। 'देवि, प्रसीद, सन्दिश, प्रेषय माम्। यामि, आन-यामि तं देवं चन्द्रापीडं ते हृदयदयितम्' इति। सा अब्रवीत्। 'पत्रलेखे, किं सन्दिशामि? साधय समीहितम्' इत्यभिधाय मां व्यसर्जयत्" इति।

चन्द्रापीडस्तु तथा उपालम्भगर्भं विज्ञप्तः पत्रलेखया स्वभाव-धीरप्रकृतिरपि नितरां पर्याकुलोऽभवत्। तां च अवोचत्। 'पत्रलेखे, किं करोमि? मन्ये ममापि मनोव्यामोहकारी कोऽपि शापः एव अयम्। सर्व एव मम दोषः। तत् अधुना प्राणैः अपि उपयुज्यमानः तथा करोमि, यथा न निष्ठुरहृदयं जानाति मां देवी।' इत्येवं वदत्येव चन्द्रापीडे, प्रविश्य प्रतीहारी व्यज्ञापयत्। 'युवराज, एवं समादिशति देवी विलासवती। श्रुतं मया पत्रलेखा अत्र पुनः परा-गता इति। अपि च तवापि कापि महती वेला वर्तते दृष्टस्य। तत् अनया सह एव आगच्छ' इति। चन्द्रापीडस्तु तदाकर्ण्य चेतसि अकरोत्। 'अहो, संशयदोलारूढं मे जीवितम्। एवम् अम्बा निमेषमपि माम् अपश्यन्ती दुःखमास्ते। पत्रलेखामुखेन च एवम् आज्ञापितम् आगमनाय मे देवीप्रसादेन। बलवान् जननीस्नेहः। अमोच्यं तावत् तातचरणशुश्रूषासुखम्। अनुरक्ताः प्रजाः गरीयान् गन्धर्वराजसुतानुरागः। दुस्त्यजा जन्मभूमिः। परिग्राह्या देवी कादम्बरी।' इत्येवं चिन्तयन् एव पत्रलेखाकरावलम्बी जननी-समीपम् अगात्। तत्र च तं दिवसमनयत्।

* * *

## २२ केयूरकागमनप्रयोजनम्

एकदा चन्द्रापीडः निर्गत्य बहिःनगर्याः पत्रलेखया सह क्षिप्रातटानि अनुसरन् अतिदूरमिव चरणाभ्यां बभ्राम। भ्राम्यंश्च रयेण आगच्छन्तं तुरङ्गम् अद्राक्षीत्। ततः पत्रलेखाम् अवादीत्। 'पत्रलेखे, पश्य यः एषः पुरः एव अश्ववारः ज्ञायते केयूरकोऽयम्' इति। यावत् तया सह एवं निरूपयति तावत् एव समुपससार केयूरकः। तं सस्पृहम् आलोक्य चन्द्रापीडः अवादीत्। 'केयूरक, कथय देव्याः कादम्बर्याः महाश्वेतायाश्च सन्देशम्।' केयूरकः अगादीत्।

"देव, किं विज्ञापयामि। नास्ति मयि सन्देशलवोऽपि देव्याः कादम्बर्याः महाश्वेतायाः वा। यदा एव पत्रलेखां मेघनादाय समर्प्य आगतेन प्रतिनिवृत्य मया अयं देवस्य उज्जयिनीगमनवृत्तान्तो निवेदितः, तदा एव ऊर्ध्वं विलोक्य, दीर्घम् उष्णं च निःश्वस्य सनिर्वेदम् एवं एतत्!' इति उक्त्वा उत्थाय महाश्वेता पुनः तपसे स्वमेव आश्रमपदमाजगाम। देवी अपि कादम्बरी झटिति हृदये अयोधनेन इव अभिहता, मूर्च्छितेव अविदितमहाश्वेतागमनवृत्तान्ता सकलम् एव तं दिवसम् अस्थात्। परेद्युश्च प्रातः एव उपसृतं मां 'किं मे पुरः तिष्ठसि?' इति तर्जयन्ती इव कोपपर्याकुलया दृष्ट्या चिरं माम् आलोकितवती। तथा दृष्टश्च तया दुःखितया देव्या, आदिष्टम् एव गमनाय आत्मानं मन्यमानः अहम्, अनिवेद्य एव देव्यै देवपादमूलम् उपागतोऽस्मि।"

इति आवेदयन्तं केयूरकं चन्द्रापीडः उवाच 'भवतु, सम्प्रति न शक्नोमि अतः परं श्रोतुम्। किं करोमि? केयूरक, किम् आकलयसि? यावद्वयं परापतामः, तावत् प्राणान् सन्धारयिष्यति देवी कादम्बरी? न जाने निमेषेण एव किं भवति' इति। स तु व्यज्ञपयत्। 'देव, धैर्यं समवलम्ब्य गमनाय यत्नः क्रियताम्। तस्याः

हि त्वदालोकनेच्छा निमेषितुम् अपि न ददाति। समागमाशया एव अवष्टब्धं हृदयम्।' एवं वदन्तम् एव आदिदेश विश्रान्तये केयूरकम्। आत्मनापि गमनचिन्तां प्राविशत्। "यदि तावत् अकथयित्वा अपक्रम्य गच्छामि, ततः गतस्यापि मम कुतः सुखम्? तातेन स्वभुजात् अवारोप्य मय्येव राज्यभारः समारोपितः। अथ आवेद्य तातस्य अम्बायाश्च ताभ्यां च विसर्जितः गच्छामि, तत्रापि किं कथयामि? 'मम स्नेहदुःखिता गन्धर्वराजपुत्री कादम्बरी माम् उद्दिश्य दुःखं तिष्ठति' इति। किं वा 'बलवान् मे तस्याम् अनुरागः न तया विना अहं प्राणान् सन्धारयामि' इति। अपरोऽपि वा कश्चिद् व्यपदेशः न शक्यते एव पुनर्गमनाय कर्तुम्। सम्प्रत्येव समधिकात् वर्षत्रयात् प्रसाध्य वसुधां प्रत्यागतोऽस्मि। अकथयित्वा च गमनकारणं कथम् आत्मानं मोचयामि?। कथं मां मुञ्चतु तातः अम्बा वा? किं करोमि एकाकी? कं पृच्छामि? को मे समुपदिशतु? वैशंपायनोऽपि असन्निहितः पार्श्वे मे। केन वा अपरेण सह समानदुःखो भवामि?" इत्येवं चिन्तयतः एव अस्य सा निशा दुःखदीर्घापि क्षयमगमत्।

प्रातरेव च किम्वदन्तीं शुश्राव चन्द्रापीडः यथा किल दशपुरं यावत् परागतः स्कन्धावार इति। तां च श्रुत्वा चकार चेतसि। अहो विधेर्भगवतः अनुग्राह्योऽस्मि, यस्य मे परागतः द्वितीयं हृदयं वैशंपायनः इति। प्रहर्षपरवशश्च प्रविशन्तम् आलोक्य केयूरकमवादीत्। 'केयूरक, करतलवर्तिनीं सिद्धिम् अधुना अवधारय। प्राप्तो वैशंपायनः' इति।

स तु तदाकर्ण्य 'भद्रकम आपतितम्' इत्यभिधाय व्यज्ञपयत्। 'अवश्यं देवस्य देवीप्राप्त्या भवितव्यम्। केन कदा वा अवलोकितः ज्योत्स्नारहितश्चन्द्रमाः? चेतसा तु अग्रतः गतः एव देवः। शरीरे-

णापि अनुपदम् उच्चलितः एव । अतः विज्ञापयामि । किमपरं मया अत्र साधनीयम् ? तत् देवागमनोत्सवावेदनाय गमनानुज्ञया प्रसादं क्रियमाणम् इच्छति मे हृदयम् इदानीमेव । '

इति विज्ञापिते केयूरकेण चन्द्रापीडः प्रत्युवाच । ' किमुच्यते ? कस्य अपरस्य ईदृशी देशकालज्ञता ? को वा अपरः अस्मासु एवं निर्व्याजभक्तिः ? तत् साधु चिन्तितम् । गम्यतां देव्याः प्राणसन्धारणाय । मदागमनप्रत्ययार्थं च पत्रलेखा अपि त्वयैव सह प्रयातु देवीपादमूलम् ' इत्यभिधाय मेघनादमाहूय तम् आदिदेश । 'मेघनाद, यस्यां भूमौ पत्रलेखानयनाय पूर्वं मया त्वं स्थापितः, तां भूमिं यावत्, पत्रलेखाम् आदाय केयूरकेण सह अग्रतो गच्छ । अहमपि वैशंपायनमालोक्य अनुपदं ते परागतः । ' इत्यादिश्य, पत्रलेखाम् अभिमुखो भूत्वा अभाषत । ' पत्रलेखे, मम जीवितं तवैव हस्ते वर्तते । शिरसा प्रणम्य विज्ञाप्या देवी कादम्बरी । यथा च मे न निष्फलम् आगमनं भवति, तथा देव्या आत्मसन्धारणाय आत्मना एव यत्नः कार्यः ' इति सन्दिश्य, केयूरकं सस्नेहं परिष्वज्य, आत्मकर्णादपनीय अनेकवर्णरुचिरं सन्देशमिव कर्णाभरणम् अस्य कर्णे कृत्वा, ' महाश्वेताश्रमं यावत्, पुनः त्वयैव सह अनया मन्नयनाय आगन्तव्यम् ' इति आदिश्य व्यसर्जयत् ।

* * *

## २३ चन्द्रापीडः वैशंपायनं प्रत्युद्गच्छति

निर्गतायां च केयूरकेण सह पत्रलेखायां, चन्द्रापीडः शून्यहृदयः क्षणमिव स्थित्वा वैशंपायनस्य प्रत्युद्गमनाय आत्मानं मोचयितुं पितुः पादमूलमगात् । अथ तारापीडः कृतप्रणामं चन्द्रापीडम् आलोक्य,

पार्श्वे भूमौ एव समुपाविशन्तम् आकृष्य हठात् पादपीठे समुपवेश्य शुकनासमवादीत्।

'शुकनास, पश्य इयं आयुष्मतः चन्द्रापीडस्य लक्ष्मच्छायेव चन्द्रमसः, मधुकरावलीव कमलाकरस्य, श्मश्रुराजिलेखा। विवाहमङ्गलयोग्यां दशाम् आरूढोऽयम्। तद्देव्या विलासवत्या सह सम्मन्त्र्य निरूप्यतां काचित् जगतीपतिकन्यका। सम्प्रति वधूमुखकमलदर्शनेन आनन्दयामः आत्मानम्।

इत्युक्तवति तारापीडे शुकनासः प्रत्युवाच। 'साधु चिन्तितं देवेन। अनेन तु सम्भाविताः सर्वाः कलाः। गृहीताः एव सर्वदिग्वधूनां कराः। स्थापिता एव कुटुम्बिनीपदे राजलक्ष्मीः। किम् अतः परम् अवशिष्यते, येन अनेन न परिणीयते ?'

इत्यभिहितवति शुकनासे लज्जावनम्रवदनः चन्द्रापीडश्चकार चेतसि– 'अहो, मम कादम्बरीसमागमोपायचिन्तासमकालम् एव ईदृशी तातस्य बुद्धिरुत्पन्ना। तत् यदुच्यते, वनगहनप्रविष्टस्य देशिकदर्शनम्, महार्णवपतितस्य यानपात्राभ्यागमः तदेव आपतितं मयि' इति।

ततः शुकनासमुखेन एव वैशंपायनप्रत्युद्गमनाय आत्मानं मोचयित्वा गमनसंज्ञाशङ्खनादाय आदिदेश चन्द्रापीडः। अचिराच्च इन्द्रायुधम् आरुह्य निर्जगाम नगर्याः। निर्गत्य च, उत्तीर्य शिप्रां दशपुरगामिना मार्गेण प्रावर्तत गन्तुम्। अथ अपरात्रवेलया योजनत्रितयं लङ्घयित्वा, सहसा एव अग्रतः स्कन्धावारमद्राक्षीत्।

दृष्ट्वा च अकरोत् चेतसि। 'अहो! भद्रकं भवति यत् अचिन्तितागमनः एव प्रविश्य वैशंपायनं पश्यामि।' इत्येवं चिन्तयित्वा मूर्धानम् आवृत्य उत्तरीयेण, नानाव्यापारव्यग्रसकललोकं स्कन्धावारम् आससाद। प्रविशंश्च, 'कस्मिन् देशे वैशंपाय-

नावासः ?' इति पप्रच्छ। ततः तत्सन्निहिताभिः स्त्रीभिः अप्रत्यभिज्ञाय 'भद्र, किं पृच्छसि? कुतोऽत्र वैशंपायनः?' इति आवेद्यमानः, 'आः पापाः, किम् एवम् असम्बद्धं प्रलपथ?' इति शून्यहृदयः एव, उत्त्रस्तः इव हरिणशावकः, धेनुविरहात् उत्कर्णः इव तर्णकः, न किञ्चित् पश्यन्, 'किमर्थम् आगतोऽस्मि, क्व गच्छामि,' इति सर्वमेव अचिन्तयमानः, अन्धः इव, मूकः इव कटकमध्यदेशं यावत् अवहत्।

अथ इन्द्रायुधप्रत्यभिज्ञानात्, वार्तया एव अनुप्रधावितराजपुत्रदर्शनाच्च 'देवः चन्द्रापीडः' इति ससम्भ्रमप्रधावितानां शून्यदृष्टीनां राजन्यसहस्राणां मुखानि अवलोक्य 'क्व वैशंपायनः?' इति सः अपृच्छत्। ततस्ते सर्वे 'अस्मिन् तरुतले अवतरतु तावत् देवः, ततः यथावस्थितं विज्ञापयामः' इति न्यवेदयन्।

चन्द्रापीडस्तु अन्तर्दह्यमान इव, तुरगात् अवतीर्य चकार चेतसि। 'अहो! मे रम्योऽपि अरमणीयः संवृत्तो जीवलोकः। को मे ददातु पुनः तादृशं मित्ररत्नम्? कम् आलपामि? किं आत्मानम् आहत्य हठात् प्राणैर्वियोजयामि?' इत्येतानि चान्यानि च अधोमुखः एव विकल्प्य तान् अप्राक्षीत्। 'मयि आगते किं कश्चित् गुरुतरः सङ्ग्रामः अन्तरे समुत्पन्नः? व्याधिर्वा कश्चित् गुरुतरः सङ्ग्रामः अन्तरे समुत्पन्नः? व्याधिर्वा कश्चित् असाध्यरूपः समुपजातः?' इति।

ते तु एवं पृष्टाः व्यज्ञपयन्। 'देव, शान्तं पापम्! देवशरीरम् इव वर्षशतं ध्रियते वैशंपायनः' इति। एतदाकर्ण्य चन्द्रापीडः आनन्दनिर्भरः तानवादीत्। 'अधुना किं वृत्तम् अस्य, येन असौ नागतः? कथं वा तम् एकाकिनम् उत्सृज्य आयाता भवन्तः?' ते च एवं पृष्टाः व्यज्ञपयन्।

"देव, श्रूयतां यथावृत्तम्। 'वैशंपायनेन सह भवद्भिः आगन्त-

व्यम्' इति आदिश्य गतवति देवे, अन्यस्मिन् अहनि, प्रातरेव अस्मान् वैशंपायनः अभ्यधात्। 'अतिपुण्यं हि अच्छोदसरः पुराणे श्रूयते। तत् अस्मिन् स्नात्वा प्रणम्य भगवन्तं महेश्वरं, व्रजामः। दिव्यजनसेविता केन कदा पुनः स्वप्नेऽपि भूमिः इयम् आलोकिता।' इत्यभिधाय चरणाभ्यामेव अच्छोदसरस्तीरमयासीत्। तत्र च अतिरम्यतया सर्वतो दत्तदृष्टिः तटलतामण्डपमद्राक्षीत्।

"दृष्ट्वा च तं विस्मृतनिमेषेण चक्षुषा विलोकयन् किमपि अन्तरात्मना स्मरन् इव तूष्णीम् अधोमुखस्तस्थौ। तथावस्थितं च तमवलोक्य अवदाम वयम्। 'प्रयाणाभिमुखः सकलः स्कन्धावारः त्वां प्रतिपालयन् आस्ते। अतिमहती वेला जाता। किम् अद्यापि विलम्बितेन?' इति। स तु एवम् उक्तः न किञ्चिदपि प्रत्युत्तरम् अदात्।

"पुनः पुनश्च अस्माभिः आगमनाय अनुरुध्यमानः आह स्म। 'मया तु न यातव्यम् अस्मात् प्रदेशात्। गच्छन्तु भवन्तः स्कन्धावारम् आदाय। अनेन एव क्षणेन सर्वत्र विगलितं मे प्रभुत्वम्। तथा हि स्मरन् इव किमपि मनो नान्यत्र प्रवर्तते। निगडितौ इव अन्यत्र पदमपि न दातुं चरणौ उत्सहेते। अथ बलात् भवन्तः मां निन्नीषवः, तत्रापि जीवितधारणं न सम्भावयामि। शपामि वयस्यचन्द्रापीडस्यैव जीवितेन यदि किञ्चिदपि जानामि यत् केन कारणेन न शक्नोमि अतो गन्तुम्' इत्युक्त्वा किमपि नष्टामिव अन्विष्यन् अनन्यदृष्टिः बभ्राम। वयमपि तत्प्रतिबोधनप्रत्याशया दिनत्रयं स्थित्वा तत्परिकरं तत्र स्थापयित्वा आगताः" इति।

चन्द्रापीडस्य तु तं स्वप्नेऽपि अनुत्प्रेक्षणीयं वैशम्पायनवृत्तान्तम् आकर्ण्य उदपादि चेतसि। किं पुनः ईदृशस्य वैराग्यस्य कारणं भवेत्? स्वीयं च न पश्यामि किञ्चित् स्खलितम्। प्रशमस्यापि

ईदृशस्य नैषः कालः । अद्याप्यसौ विद्वज्जनोचिते गार्हस्थ्ये एव न निवेशितः । न जीवलोकसुखानि अनुभूतानि । किमेतत् तेन कृतम् ? ' इति आक्षिप्तचेताः विसर्ज्य सकलमेव राजकं चिन्तामेव अविशत् । ' यदि तावत् अस्मात् एव प्रदेशात् गच्छामि तदा मयापि वैशम्पायनस्य अनुकृतं भवति । निवृत्य पुनर्गमने च अमुक्ति-पक्षम् आशङ्कते मे हृदयम् । अथवा अस्थाने एव मे शङ्का । वैशम्पायनप्रत्यानयनाय यान्तं न तातो न अम्बापि निवारयितुं शक्नोति माम् । गतश्च वैशम्पायनसहितः अग्रतः कादम्बरीसमीपं गमिष्यामि । '

इति निश्चित्य वैशम्पायनवियोगदुःखं परिणामसुखम् औषधमिव बहु मन्यमानः प्रभातसमये परापतितवान् उज्जयिनीम् ।

* * *

## २४ कस्य दोषः ?

अथ दूरत एव नगरीनिर्गतैः आर्त्या पृच्छ्यमानं कथ्यमानं च वैशंपायनवृत्तान्तमेव समन्तात् शुश्राव चन्द्रापीडः । शृण्वंश्च चकार चेतसि । ' बाह्यस्य तावत् जनस्य इयम् ईदृशी समवस्था । किं पुनः येन असौ अङ्केन लालितः संवर्धितः वा ? तत् अतिकष्टं मे वैशम्पा-यनेन विना तातस्य शुकनासस्य अम्बायाः मनोरमायाः वा दर्शनम्' इत्येवं चिन्तयन् नासाग्रनिहितदृष्टिः एव विवेश उज्जयिनीम् । अवतीर्य च, राजकुलद्वारि, विशन् एव, ' आर्यशुकनासभवनं सह देव्या विलासवत्या गतो राजा ' इति शुश्राव । श्रुत्वा च तत्रैव जगाम । गच्छंश्च ' हा वत्स वैशम्पायन, कथं त्वम् एकाकी निर्मा-नुषे तस्मिन् शून्यारण्ये स्थितः ? चन्द्रापीडस्य उपरि कथं तव ईदृशी निःस्नेहता जाता ? त्वाम् अपश्यन्ती न जीवामि । वत्स,

यत्र ते अवस्थातुम् अभिरुचितं नयस्व मामपि तत्रैव पितरं विज्ञाप्य' एतानि चान्यानि च मनोरमां विलपन्तीम् अश्रौषीत्।

चन्द्रापीडः तेन च अतिकरुणेन प्रलापेन विह्वल इव कथं कथमपि प्रविश्य, अधोमुख एव प्रणम्य पितरं दूरत एव उपाविशत्। उपविष्टं च तं क्षणमिव दृष्ट्वा राजा गद्गद्ध्वानिना अभ्यधात्। 'चन्द्रापीड, अनुचितम् इमं सुहृदः ते वृत्तान्तम् आकर्ण्य त्वद्दोषम् आशङ्कते मे हृदयम्।'

इत्येवंवादिनः नरपतेः आक्षिप्य वचनं, स्फुरिताधरेण शुकनासोऽब्रवीत्। 'देव, यदि चन्द्रमसि ऊष्मा, अंशुमालिनि वा तमः सम्भाव्यते, ततः युवराजेऽपि दोषः। **न हि अतः परम् अपरं कष्टतरं किञ्चिदपि, यत् गुणेषु वर्तमानो दोषेषु सम्भाव्यते इतरजनेनापि किं पुनर्गुरुजनेन?** जन्मनः प्रभृति देवस्य विलासवत्या देव्याश्च अङ्कलालनया यो न गृहीतः तस्य दुर्ग्रहप्रकृतेः चन्द्रापीडः किं करोतु? मातुः अहमेव एकः इति एतस्य हृदये नापतितम्। अपरम्, असौ तिर्यङ् महता यत्नेन शुक इव पाठितः पुष्टश्च देवेन। तिर्यञ्चोऽपि पोषिताः पोषितरि स्नेहम् आबध्नन्ति। तेऽपि कृतं जानन्ति। ईदृशाचरितेन तेनापि अवश्यमेव तिर्यग्योनौ पतितव्यम्।' इत्युक्त्वा अन्तर्मन्युपूरेण निःश्वसन् एव अवतस्थौ। तदवस्थं तं तारापीडः प्रत्युवाच।

'एतत् खलु अम्बुबिन्दुभिः आपूरणम् पयोधेः, यत् अस्मद्विधैः परिबोधनम् आर्यस्य। तथापि प्राज्ञस्यापि बहुश्रुतस्यापि विवेकिनः अपि विशुद्धमपि मानसं, वर्षसलिलेन सर इव, कलुषीक्रियते सर्वस्य; न बुद्धिर्बुध्यते; येन ब्रवीमि। अन्यत् च अस्मत्तः लोकवृत्तम् आर्यः एव सुतरां वेत्ति। यौवनावतारे हि शैशवेनैव सह गलति गुरुजनस्नेहः। वक्षसैव सह विस्तीर्यते वाञ्छा। दोर्द्वयेनैव सह

स्थूलताम् आपद्यते धीः। आकारेणैव सह आविर्भवन्ति हृदयाद्विकाराः। न प्रविशति गुरूपदेशः श्रोत्रे। किमेवम् आर्येण अनुचितम् अपत्यस्नेहस्य एवमुक्तम्? यत् गुरूणां मुखेभ्यः निष्क्रामति शुभं अशुभं वा, शिशुषु तदवश्यं फलति। **गुरवो हि दैवतं बालानाम्**। तत् उत्सृज्यताम् अयम् अमर्षवेगः वैशम्पायनस्य उपरि। विरूपकं तु तेन न किञ्चिदपि आचरितम्। सर्वपरित्यागं कृत्वा स्थितः इत्येतदपि, कारणम् अविज्ञाय किमेवं दोषपक्षे निक्षिपामः। आनीयतां तावदसौ। ततो यथायुक्तं विधास्यामः।'

इत्युक्तवति तारापीडे पुनः शुकनासोऽभ्यधात्। 'अत्युदारतया वत्सलत्वाच्च एवं आदिशति देवः।' इत्युक्तवति शुकनासे कशया इव अन्तस्ताडितः, उद्बाष्पदृष्टिः, चन्द्रापीडः शनैः शनैः शुकनासमवादीत्। 'आर्य, न मदीयेण दोषेण नागतो वैशंपायनः। अनुपदमेव स्कन्धावारम् आदाय आगच्छति, इति अमुना हेतुना, विना तेन आगतोऽहम्। तत् आर्यो दापयतु मे वैशंपायनानयनाय गमनाभ्यनुज्ञां तातेन। तम् आदाय आगतमेव माम् अवधारयतु आर्यः।'

इति अभिहितवति चन्द्रापीडे, 'गमनाय विज्ञापयति युवराजः। किम् आज्ञापयति देवः?' इति शनैः शनैः शुकनासो राजानम् अप्राक्षीत्। ततः किञ्चिदिव ध्यात्वा तारापीडः प्रत्यवादीत्। "आर्य, मया ज्ञातम् 'एतेषु दिवसेषु इन्दोः ज्योत्स्नामिव वत्सस्य वधूं द्रक्ष्यामि' इति, यावदयम् 'अपरः वैशंपायनवृत्तान्तः दुष्प्रकृतिना विधात्रा अन्तरा पातितः। न तम् अन्यः शक्नोति आनेतुम्। तत् यातु। तत् गणकैः सह आर्यः दिवसं लग्नं च गमनाय निरूपयतु" इति।

* * *

## २५ वैशंपायनप्रत्यानयनप्रयत्नः

चन्द्रापीडस्तु तां कादम्बरीविरहस्रजामिव गमनाभ्यनुज्ञां हृदयेन उद्वहन्, प्रहृष्टान्तरात्मा अपि अपहर्षदृष्टिः, प्रविश्य मातुः समीपे समुपविश्य पार्श्वस्थितां मनोरमाम् आश्वास्य अवादीत्। 'अम्ब, समाश्वसिहि। वैशंपायनानयनाय मां विसर्जय त्वम्।' सा तु एवम् अभिहिता प्रत्युवाच। 'तात, कः खलु मे त्वयि तस्मिंश्च विशेषः? तदेकधा तम् एकं न पश्यामि कठिनहृदयम्। त्वयि पुनर्गते च, त्वद्दर्शनमपि दूरीभवति। तन्न गन्तव्यम्। वत्स, एकेनापि युवयोः आवां पुत्रवत्यौ।'

इत्युक्तवत्यां मनोरमायां विलासवती धीरम् उवाच। 'प्रियसखि, तव मम च एवम् एतत् यथा त्वया उक्तम्। अयं पुनः वैशंपायनेन विना कं पश्यतु? तदास्ताम्। किम् एनं निवारयसि? तत् यातु।' इत्यभिधाय मनोरमां हस्ते गृहीत्वा निजावासम् अयासीत्।

चन्द्रापीडोऽपि स्वगृहं गत्वा गमनाय उत्ताम्यता हृदयेन गणकान् आहूय रहसि आज्ञापितवान्। 'यथा विना विलम्बेन मे गमनं भवति तथा भवद्भिः आर्यशुकनासाय दिनम् आवेदनीयम्।' इत्येवम् आदिष्टास्ते व्यज्ञापयन्। 'देव, यथा सर्वे एव ग्रहाः स्थिताः तथा अस्मन्मतेन देवस्य गमनमेव वर्तमाने न शस्यते। अपरम् अपि कर्मानुरोधात् राजेच्छा एव कालः। राजा कालस्य कारणम्। यस्यामेव वेलायां चित्तनिर्वृतिः सैव वेला सर्वकार्येषु।' इति विज्ञापिते मौहूर्तिकैः पुनस्तानब्रवीत्। 'तातेन एवं आदिष्टम्' इति ब्रवीमि। अन्यत्, कार्यपराणां प्रतिक्षणोत्पादिषु आत्ययिकेषु कार्येषु दिवसनिरूपणा एव कीदृशी? तत्तथा कथयिष्यथ यथा श्वः एव गमनं भवेत्' इति। 'देवः प्रमाणम्' इति अभिधाय गतेषु च तेषु शरीरस्थितिकरणाय उदतिष्ठत्।

अथ अन्येद्युः प्रस्थानमङ्गले प्रणामाय उपगतं चन्द्रापीडं विलासवती अवादीत्। 'तात, न ईदृशी प्रथमगमनेऽपि ते पीडा मम समुत्पन्ना, यादृशी तव गमनेन अधुना। न जानामि एव, किमुत्पश्यामि इति? किं बहुभ्यः दिवसेभ्यः कथमपि आगतः मे वत्सो झटित्येव पुनर्गच्छति इति। न च वैशम्पायनानयनाय गच्छतस्ते गमनं निवारयितुं पारयति वाणी। हृदयं पुनः न इच्छति एव त्वदीयं गमनम्। तत् ईदृशीं मे पीडां विज्ञाय यथा पुरा स्थितं, न तथा दीर्घकालम् आयुष्मता स्थातव्यम्।' इत्यादिशन्तीं स्वमातरं चन्द्रापीडः व्यज्ञपयत्। 'मातः, तदा दिग्विजयप्रसङ्गात् स्थितः अस्मि। अधुना पुनः इयानेव मे कालक्षेपः, यावत्तम् उद्देशं परापतामि। तत् पुनः चिरागमनकृता पीडा न हृदये त्वया भावनीया।' इत्येवं विज्ञप्ता तं गाढम् आलिङ्ग्य कृच्छ्रान्मुमोच माता।

मुक्तश्च मात्रा पितुर्वासभवनमगच्छत्। तत्र च तारापीडः तं चक्षुषा पिबन्निव, प्रेम्णा परिष्वज्य अवादीत्। 'वत्स, पित्रा अहं दोषेषु सम्भावितः इति एषा मनागपि दुःखासिका न कार्या। अस्माभिः सम्यक् परीक्ष्य एव गुणगणैः एव अधिगम्यः राज्यभारः त्वयि आरोपितः, न तनयस्नेहादेव। त्वया एव सकललोकानुरञ्जने यतितव्यम्। गतः खलु कालः अस्माकम्। अस्माभिः न पीडिताः प्रजाः लोभेन। न उद्वेजिताः गुरवो मानेन। वृत्तं रक्षितं, न शरीरम्। वाच्यात् भीतं, न मरणात्। त्वज्जन्मना कृतार्थ एव अस्मि। तत् अयमेव मे मनोरथः दारपरिग्रहात् प्रतिष्ठिते त्वयि, सकलमेव इमं राज्यभारम् आरोप्य पूर्वराजर्षिगतं पन्थानम् अनुयास्यामि इति। तद्वत्सेनापि तथा कर्तव्यं वत्सेन, यथा न चिरकालम् एष मे मनोरथः अन्तर्हृदय एव विपरिवर्तते।' इत्यभिधाय मुखे ताम्बूलम् अर्पयित्वा व्यसर्जयत्।

ततः अप्रभातायाम् एव यामिन्यां चन्द्रापीडः कृतापसर्पणम्, अकृतहर्षहेषारवम्, अनाविष्कृतगमनोत्साहं दीनं, इन्द्रायुधम् आलोक्यापि पुनर्निवारणशङ्कया रयेणैव निरगात् नगर्याः। निर्गत्य च शिप्रातटे तत्प्रस्थानमङ्गलावस्थानाय उपकल्पितं कायमानम् अप्रविश्य वहिरेव गतो युवराजः।

* * *

## २६ वैशम्पायनान्वेषणम्

अथ चन्द्रापीडं तथागतम् आलोक्य परिजनः राजपुत्रलोकः च इतस्ततः तम् अनुजग्मतुः। युवराजश्च गव्यूतित्रितयमिव गत्वा सुलभपयोयवसे प्रदेशे निवासमकल्पयत्। उत्ताम्यता हृदयेन अप्रभातायाम् एव यामिन्याम् उत्थाय पुनरवहत्। वहंश्च "वैशंपायनस्य पृष्ठतः अनुगम्य, 'क्व परं पलाय्यते?' इति तस्य वैलक्ष्यम् अपनयामि, एवं तत्समागमसुखम् अनुभूय पुनः महाश्वेतां पश्यामि, तया सहैव हेमकूटं गच्छामि, तत्र महाश्वेतोपपादितोद्वाहमङ्गलः कादम्बरीम् आलोकयन् चक्षुषी कृतार्थतां नयामि" इत्येतानि च अन्यानि च चिन्तयन् अचेतितक्षुत्पिपासाव्यथः, दिवा रात्रौ च अवहत्।

एवं च वहतोऽप्यस्य अध्वनः अर्धपथे एव आशुगमनविघ्नकारी बभूव जलदकालः। अन्धकारम् अनायन्त दश दिशः जलधरैः। तथापि घटिकामात्रमपि अकृतविलम्बः अच्छोदम् आससाद। आसाद्य च उपसर्पन्नेव सर्वान् अश्ववारान् आदिदेश। 'कदाचित् असौ वैलक्ष्यान् अस्मान् आलोक्य अपसर्पत्येव। चतुर्ष्वपि पार्श्वेषु अवहिता भवन्तु भवन्तः' इति। आत्मनाऽपि तुरगगतः एव खिन्नः

अपि अखिन्नः इव विचिन्वन् तरुमूलानि लतामण्डपांश्च समन्तात् बभ्राम। भ्राम्यंश्च यदा न कचिदपि किञ्चिदवस्थानचिह्नम् अपि अद्राक्षीत्, तदा चकार चेतसि। 'अहो! कष्टतमम् आपतितम्। वैशंपायनम् अदृष्ट्वा अस्मात् प्रदेशात् पदात् पदमपि गन्तुं पादौ एव न उत्सहेते मे। कदाचित् अस्य वृत्तान्तस्य अभिज्ञा महाश्वेताऽपि भवति एव' इति उत्पन्ननिश्चयः, महाश्वेताश्रमम् उपजगाम।

प्रविश्य च गुहाद्वारे एव शिलातले समुपविष्टाम् अधोमुखीं महाश्वेताम् अपश्यत्। दृष्ट्वा च ताम् अस्य उदपादि हृदये 'मा नाम देव्याः कादम्बर्या एव किमपि अनिष्टम् उत्पन्नं भवेत्, येन इदम् ईदृशी समवस्था हर्षहेतावपि मदागमने अनुभूयते महाश्वेतया' इति आशङ्काभिन्नहृदयः उपसृत्य 'किमेतत्?' इति तरलिकाम् अपृच्छत्। सा तु महाश्वेताया एव मुखम् अवलोकितवती।

अथ महाश्वेता एव प्रत्यवादीत्। "महाभाग, किम् इयम् आवेदयाति वराकी। यया पुरा आत्मीयदुःखं श्रावितं, सा एव अहं मन्दभाग्या भूयः श्रावयामि दुःखमिदम्। श्रूयताम्। 'केयूरकात् भवद्गमनम् आकर्ण्य विदीर्णमानसा न मया चित्ररथस्य मनोरथः पूरितः, न चापि हृदयवल्लभसमागमनिर्वृता कादम्बरी वीक्षिता' इति उत्पन्नवैराग्या कष्टतरतपश्चरणाय अत्रैव आगता। आगत्य च महाभागस्य एव तुल्याकृतिं प्रनष्टमिव किमपि इतस्ततो विलोकयन्तं ब्राह्मणयुवानम् अपश्यम्। स तु माम् उपसृत्य, अनुस्मरन्निव किमपि, सुचिरम् आलोक्य अब्रवीत्। 'सुतनु, सर्वः एव जगति जन्मनो वयसः आकृतेर्वा सदृशम् आचरन् न वचनीयतामेति। तव पुनः मालतीकुसुमसुकुमारा तनुः तपश्चरणक्लेशेन म्लानिम् उपनीयते। चन्द्रमुखि, शरणमागतोऽस्मि ते। रक्ष मां त्वदायत्तजीवितम्। शरणागतपरित्राणं हि तपस्विनीनामपि धर्मः एव' इति।

"अहं तु तत् आकर्ण्य आ पादतलात् उत्कम्पितगात्रयष्टिः, तं क्रोधावेगेन अवदम्। 'आः पाप, कथम् एवं गदतः न ते अवशीर्णा सहस्रधा जिह्वा? येन एव खलु हतविधिना शुकः इव वक्तुम् एवं शिक्षितः, तेनैव किमिति तस्यामेव जातौ न क्षिप्तोऽसि?' इत्युक्त्वा चन्द्राभिमुखी भूत्वा कृताञ्जलिः पुनः अवदम्। 'भगवन् परमेश्वर, सकलभुवनचूडामणे, लोकपाल, यदि मया देवस्य पुण्डरीकस्य दर्शनात् प्रभृति मनसापि अपरः पुमान् न चिन्तितः, तदा अनेन मे सत्यवचनेन अयं मदुदीरितायामेव जातौ पततु' इति।

"स च मद्वचनानन्तरमेव सद्यः छिन्नमूलतरुरिव क्षितौ अपतत्। अतिक्रान्तजीविते तस्मिन् तत्परिजनतः श्रुतं यथाऽसौ महाभागस्यैव मित्रं भवति।" इत्युक्त्वा च महीम् अश्रुवेगेन आप्लावितवती।

चन्द्रापीडस्य तु तत् आकर्ण्य 'भगवति, न मया प्राप्तं देव्याः कादम्बर्याः चरणपरिचर्यासुखं, तत् जन्मान्तरेऽपि भगवती संपादयित्री भूयात्' इति गदतः एव हृदयम् अस्फुटत्।

अथ महाश्वेतायाः शरीरम् उत्सृज्य ससम्भ्रमप्रतिपन्नचन्द्रापीडशरीरया, 'हा देव चन्द्राकृते, कादम्बरीप्रिय, क्व इदानीं त्वया विना गम्यते?' इति उन्मुक्तम् आर्तवचनं तरलिकया। महाश्वेता च चन्द्रापीडमुखनिहितस्तब्धदृष्टिः निश्चेष्टा अभूत्। 'आः पापे दुष्टतापसि, किमिदं त्वया कृतं? देवस्य तारापीडस्य कुलम् उत्सादितम्, अनाथीकृताः प्रजाः। देव, प्रसीद, परित्यज्य सर्वान् एकाकी क्व प्रस्थितोऽसि?' इति आरटन्ति स्म परिजनाः। इन्द्रायुधस्तु चन्द्रापीडवदननिवेशितदृष्टिः, मुहुर्मुहुः दीनतरहेषारवेण आत्मनः तुरङ्गमतां मुमुक्षन् इव दृष्टः।

* * *

## २७ किमाश्चर्यम् अतः परम् !

अथ कादम्बरी पत्रलेखानिवेदितचन्द्रापीडागमना, व्याजीकृत्य महाश्वेतादर्शनम् मातापित्रोः पुरः, प्रतिपन्नशृङ्गारवेषाभरणा, नातिबहुना परिजनेन अनुगम्यमाना प्रस्थिता। सा पत्रलेखाहस्तावलम्बिनी, पुरः केयूरकेण उपदिश्यमानमार्गा, मदलेखया सह कृतालापा आसीत्। "मदलेखे, तस्य निष्ठुरहृदयस्य आगमनम् एव न श्रद्दधे। तथागतः अपि असौ यत् किमपि त्वया एव वक्तव्यः। मया पुनः दृष्टोऽपि न आलपितव्यः" इति अभिदधाना एव चन्द्रापीडदर्शनाय उत्ताम्यन्ती तत्रैव महाश्वेताश्रमम् आजगाम।

आगत्य च, अस्तमिततारागणमिव गगनम्, उन्मुक्तजीवितं चन्द्रापीडम् अद्राक्षीत्। दृष्ट्वा च तं 'हा किमिदम्!' इति अधोमुखी धरातलम् उपयान्ती कथं कथमपि मदलेखया अधार्यत। पत्रलेखा पुनः उन्मुच्य कादम्बरीकरतलम् अचेतना क्षितिमुपागमत्।

चिरात् लब्धसंज्ञाऽपि कादम्बरी, तथैव मूढा इव निश्चलस्तब्धदृष्टिः, स्त्रीस्वभावविरुद्धेन चेतसा चन्द्रापीडवदनसमर्पिताक्षी तस्थौ। तथास्थितां च तां सपादपतनं मदलेखा अब्रवीत। 'प्रियसखि, बाष्पपूरे अमुच्यमाने अस्मिन्, अतिभारोत्पीडितं तडागमिव, मृदुसरसं सहस्रधा स्फुटति ते हृदयम्। अवेक्षस्व देवीं मदिरां देवं च चित्ररथम्। त्वया विना कुलद्वयमपि नास्ति।' इत्युक्तवतीं मदलेखां कादम्बरी विहस्य प्रत्यवादीत्।

"अयि, कुतोऽस्य मे वज्रसारकठिनस्य हृदयस्य स्फुटनम्, आलोक्यैव यन्न सहस्रधा स्फुटितम्? मया पुनः समासादितमिदं प्रियतमशरीरं, यत् सर्वदुःखानामेव उपशान्तये। तत् किमिति देवेनागच्छता, मदर्थम् प्राणांश्च उत्सृजता गुरुतां नीतम् आत्मानम् अश्रुपातमात्रेण लघूकरोमि? कथं स्वर्गगमनोन्मुखस्य देवस्य

रुदितेन अमङ्गलं करोमि? कथं वा हर्षस्थाने रोदिमि? अस्मिन् समये मरणमेव जीवितं पुनर्मरणम्।

"मदलेखे, ममोपरि तव स्नेहः, तत् तथा कर्तव्यं यथा न तातः अम्बा च मच्छोकात् आत्मानं परित्यजतः, यथा च मयि वाञ्छितं मनोरथं त्वयि पूरयतः, यथा च मे सखीजनः न स्मरति तथा करिष्यसि। पुत्रकस्य मे भवनाङ्गणे सहकारपोतस्य त्वया माधवीलतया सह उद्वाहमङ्गलं निर्वर्तनीयम्। पञ्जरबन्धदुःखात् सारिका शुकश्च मोक्तव्यौ। पुत्रको मे बालहरिणः कस्मिंश्चिन् तपोवने समर्पणीयः। शरीरोपकरणानि मे ब्राह्मणेभ्यः प्रतिपादनीयानि। वीणा पुनः आत्मनः एव अङ्कप्रणयिनी कार्या। अपरमपि यत्ते रोचते तदपि स्वीकर्तव्यम्। अहं पुनः चितानले देवस्य चन्द्रापीडस्य कण्ठलग्ना निर्वापयामि आत्मानम्।" इति अभिदधाना एव उपसृत्य महाश्वेतां कण्ठे गृहीत्वा ताम् अवादीत्। "प्रियसखि, तवाऽस्ति कीदृशी अपि प्रत्याशा यया पुनः समागमकाङ्क्षिणी दुःखानि अनुभवन्ती जीवितं धारयसि। मम पुनः सर्वतो हताशायाः साऽपि नास्ति। तत् आमन्त्रये प्रियसखीं पुनर्जन्मान्तरे समागमाय।"

इत्यभिधाय चन्द्रापीडचरणौ अङ्केन धृतवती। अथ तत्करस्पर्शेन, चन्द्रापीडदेहात् झटिति किमपि चन्द्रधवलं ज्योतिरिव उज्जगाम। अनन्तरं च अन्तरिक्षे अशरीरिणी वाक् अश्रूयत। 'वत्से महाश्वेते, पुनरपि त्वं मया एव समाश्वासयितव्या वर्तसे। पुण्डरीकशरीरं मल्लोके मत्तेजसा आप्यायमानम् अविनाशि भूयस्त्वत्समागमाय तिष्ठत्येव। इदम् अपरं मत्तेजोमयं, कादम्बरीकरस्पर्शेन आप्यायमानं, शापदोषात् विमुक्तमपि स्वतः एव अविनाशि चन्द्रापीडशरीरं भवत्योः प्रत्ययार्थम्, आ शापक्षयात् आस्ताम्। न एतत् अग्निना संस्कार्यम्, उदके वा क्षेप्तव्यम्, प्रयत्नतः प्रतिपालनीयम् आ समागमप्राप्तेः' इति।

तां तु श्रुत्वा 'किमेतत्?' इति विस्मयाक्षिप्तहृदयाः सर्वा एव गगनतलनिवेशितदृष्टयः पत्रलेखावर्जम् अतिष्ठन्। पत्रलेखा तु तेन तस्य ज्योतिषः तुषारशीतलेन स्पर्शेन लब्धसंज्ञा वेगात् धावित्वा, अश्वपालककरात् आच्छिद्य इन्द्रायुधं, 'त्वं पुनः एवं दूरं प्रस्थिते देवे, क्षणमपि तिष्ठन् न शोभसे' इति अभिदधाना तेनैव इन्द्रायुधेन सह आत्मानम् अच्छोदसरसि अक्षिपत्।

अथ तयोः निमज्जनसमयान्तरमेव तस्मात् सरःसलिलात् तापस-कुमारः सहसैव उदतिष्ठत्। उत्थाय च महाश्वेताम् उपसृत्य शोकगद्गदम् अवादीत्। 'गन्धर्वराजपुत्रि, जन्मान्तरादिवागतः अयं जनः प्रत्यभिज्ञायते न वा?' इति।

महाश्वेता तु एवं पृष्टा शोकानन्दमध्यवर्तिनी ससम्भ्रमम् उत्थाय कृतप्रणामा प्रत्यवादीत्। 'भगवन् कपिञ्जल, एवम्विधा अहम् अपुण्यवती भवन्तमपि न प्रत्यभिजानामि? तत् कथय केन असौ उत्क्षिप्य नीतः? किमर्थम् वा नीतः? क्व वा वर्तते? किं वा तव उपजातं येन एतावता कालेन वार्तामपि न दत्तवानसि? कुतो वा त्वम् एकाकी देवेन विना आगतः असि?' इति।

स तु एवं पृष्टः सर्वमेव शापवृत्तान्तं निवेद्य अब्रवीत्। 'गन्धर्व-राजपुत्रि, तुरगयोनौ समुत्पन्नस्यापि मे संज्ञा नैव अपयाता। येन मया एव चन्द्रापीडः किन्नरमिथुनानुसरणक्रमेण इह आनीतः। चन्द्रमसः अवतारः चन्द्रापीडः। यः अपि असौ प्राक्तनात् अनुराग-संस्कारात् भवतीम् अभिलषन् अजानत्या भवत्या शापाग्निना निर्दग्धः सोऽपि मे वयस्यस्य पुण्डरीकस्य अवतारः।

तच्छ्रुत्वा महाश्वेता 'हा देव पुण्डरीक, जन्मान्तरेऽपि ते अहमेव राक्षसी विनाशाय उपजाता। पुनः पुनस्तव व्यापादनमेव मम दीर्घजीवितप्रदाने दग्धप्रजापतेः प्रयोजनम् निष्पन्नम्। कम् उपयामि

शरणम्? हा हताऽस्मि' इति सोरस्ताडनम् अवनौ आत्मानम् अपातयत्।

कपिञ्जलस्तु तां सानुकम्पम् अवादीत्। 'गन्धर्वराजपुत्रि, कस्तवात्र दोषः?। यथा च शापदोषात् इदम् उपनतं भवत्योः द्वयोरपि तथा मया कथितम्। तत् मुच्यताम् अयम् आत्मनः वयस्यस्य च अश्रेयस्करः शोकानुबन्धः। यदेव भवत्या अङ्गीकृतं, तदेव अनुबध्यतां तपः। **तपसो हि नास्ति असाध्यं नाम किञ्चित्।** देव्याः हि गौर्याः तपसः प्रभावात् स्मरारेः अपि यावत् आसादितं देहार्धपदम्। एवं त्वमपि मे वयस्यस्य अङ्के तपः प्रभावात् पदम् अवाप्स्यसि' इति महाश्वेतां पर्यबोधयत्।

अथ कादम्बरी कपिञ्जलं अप्राक्षीत् 'भगवन् कपिञ्जल, पत्रलेखया त्वया च अस्मिन् सरसि जलप्रवेशः कृतः। तत् किं तस्याः वृत्तम्, इति आवेदनेन प्रसादं करोतु भगवान्' इति। स तु प्रत्यवादीत्। 'राजपुत्रि, सलिलपातात् अनन्तरं न कश्चिदपि तद्वृत्तान्तो मया ज्ञातः। तत् अधुना क्व चन्द्रापीडस्य, क्व पुण्डरीकात्मकस्य वैशंपायनस्य जन्म, किं वा अस्याः पत्रलेखायाः वृत्तम् इति सर्वथा एव अस्य वृत्तान्तस्य अवगमाय गतोऽहं प्रत्यक्षलोकत्रयस्य तातस्य श्वेतकेतोः पादमूलम्'। इति अभिदधानः एव गगनम् उदपतत्।

* * *

## २८ ततः किम्?

अथ गते कपिञ्जले कादम्बरी महाश्वेताम् अवादीत्। 'प्रियसखि, तुल्यदुःखितां त्वया सह नयता न खलु असुखं स्थापिता अस्मि भगवता विधात्रा। अद्य ते वदनं दर्शयन्ती प्रियसखी इति च

आभाषमाणा न लज्जे। तव अपि अहम् अद्यैव प्रियसखी जाता।' तत् एवं गते यत् करणीयं तदुपदिशतु मे प्रियसखी।'

इत्युक्तवतीं कादम्बरीं महाश्वेता प्रत्यवादीत्। प्रियसखि, किमत्र प्रश्नेन उपदेशेन वा? इदं चन्द्रापीडशरीरम् अङ्के एव आस्ते। अस्य अनुवृत्तिं मुक्त्वा किमन्यत् करणीयम्। अप्रत्यक्षाणां हि देवतानां मृदश्मकाष्ठमय्यः प्रतिमाः श्रेयसे पूजासत्कारेण उपचर्यन्ते। किं पुनः प्रत्यक्षदेवस्य चन्द्रमसः मूर्तिः अनाराधितप्रसन्ना?

इत्युक्तवत्यां महाश्वेतायां कादम्बरी तूष्णीमेव उत्थाय चन्द्रापीडतनुम् अन्यतरस्मिन् शिलातले स्थापयित्वा, स्नानशुचिः भूत्वा, परिधाय धौतशुचिनी दुकूले, यानि सुरभिकुसुमधूपानुलेपनादीनि चन्द्रापीडस्य सुखोपभोगाय आनीतानि, तैः एव तस्य मूर्तौ देवतोचिताम् अपचितिं समपादयत्। अङ्के च समारोपितचरणद्वया शून्यमुखी निराहारा तं दिवसम् अनयत्। यथैव च दिवसं तथैव तां क्षपामपि जाग्रती समुपविष्टा एव क्षपितवती।

प्रातश्च तदुन्मीलितं चन्द्रापीडशरीरम् अवलोक्य कादम्बरी पार्श्वस्थितां मदलेखाम् अवादीत्। 'अहं तु तादृशीम् एव इमां तनुम् अवलोकयामि तत् त्वमपि तावत् निरूपय' इति। एवमुक्ता मदलेखा तां प्रत्यवादीत्– 'प्रियसखि, किमत्र निरूपणीयम्? तादृशमेव इदं प्रसन्नं वदनम्। तथा एव इयं कान्तिः ललाटस्य। तादृशमेव लोचनद्वयम्। तथैव च इदं पाणिपादम्। तत् सत्या सा भारती, कपिञ्जलावेदितश्च शापवृत्तान्तः इति सम्भावयामि।'

इत्युक्तवतीं मदलेखाम् आनन्दनिर्भरा कादम्बरी अवादीत्। 'प्रियसखि, देवस्य शरीरम् उपचरन्तीभिः अवश्यम् आ शापक्षयात् अस्माभिः अत्र स्थातव्यम्। तत् इमम् अत्यद्भुतं वृत्तान्तं तातस्य अम्बायाश्च गत्वा निवेदय। येन न अन्यथा मां सम्भावयतः दुःखेन वा मदीयेन न तिष्ठतः' इत्यभिधाय तां व्यसर्जयत्।

गत्वा आगतया च तया आवेदितम् "प्रियसखि, सिद्धं ते अभिवाञ्छितम्। एवं सन्दिष्टं तातेन चित्ररथेन अम्बया च मदिरया 'अयमेव आवयोः परमानन्दः यद् वत्सया एव स्वयं जामाता वृतः; तत्रापि अपरं, भगवतः चन्द्रमसः अवतारः' तत् शापावसाने जामात्रा सह एव आननारविन्दं ते द्रक्ष्यावः" इति।

अथ अपगतवाति जलदसमये, एकदा चन्द्रापीडचरणमूलोपविष्टां कादम्बरीम् उपसृत्य मेघनादो व्यज्ञपयत्। 'देवि, देवो युवराजः चिरयति इति उत्ताम्यता हृदयेन देवेन तारापीडेन वार्ताहराः प्रहिताः।' इति विज्ञाप्य तूष्णीं स्थितवति मेघनादे, कादम्बरी प्रत्युवाच। 'तत् अविलम्बितं प्रवेश्यन्ताम्। पश्यन्तु देवम्' इति। आज्ञानन्तरं च मेघनादेन प्रवेशितान् तान् चिरम् अवलोक्य कादम्बरी स्वयमेव अभाषत।

"भद्रमुखाः, परित्यज्यताम् अयं शोकावेगः। सुखोदर्कः एष वृत्तान्तः। न केवलम् अत्र निरवकाशता शोकस्य, प्रत्युत विस्मयस्य अवसरः। किमत्र परिबोधनेन? अन्यत्र अदृष्टपूर्वः मनुष्येषु प्रत्यक्षीकृतः एव अयं वृत्तान्तः। भवद्भिरपि दृष्टं च पुरा इव अविकृततनोः देवस्य वदनम्। तत् गम्यताम् अधुना वार्तोत्सुकमतेः देवस्य (तारापीडस्य) पादमूलम्। न चायं वृत्तान्तः तस्मै प्रकाशनीयः। 'दृष्टः अस्माभिः, अच्छोदसरसि तिष्ठति,' एतदेव आवेदनीयम्। शरीरस्य अविनाशः पुनः प्राणैर्विनाकृतानां प्राणिनाम् दृश्यमानोऽपि अश्रद्धेयः एव। तत् अस्य आवेदनेन सुदूरस्थितमपि गुरुजनं मरणसंशये निक्षिप्य वर्तमाने प्रयोजनमेव नास्ति। प्रत्यागतजीविते जीवितेश्वरे, स्वयमेव अयम् अद्भुतः अर्थः गुरुजने जने वा प्रकटीभविष्यति।"

इत्येवम् आदिष्टास्तु त व्यज्ञपयन्। "गत्वापि दायततनयवार्ताश्रवणलालसस्य राज्ञः, देव्याः, आर्यशुकनासस्य च मुखानि उद्वीक्ष्य

निर्विकारवदनानाम् अस्माकम् अवस्थानम् अशक्यमेव।" इति विज्ञापिता तैः, 'एवमेतत्' इत्युक्त्वा कादम्बरी मेघनादम् अवादीत्। 'मेघनाद, ननु एतदपि भवतु। एभिः सह अपरः कश्चित् श्रद्धेयवचाः, प्रत्यक्षदृष्टसकलवृत्तान्तः व्रजतु सम्प्रत्ययाय।' इत्येवमादिष्टस्तु मेघनादो व्यज्ञपयत्। "भृत्यवर्गः सकल एव अयं कन्दमूलफलाशी निश्चयं कृत्वा स्थितः, यथा अस्माकं मध्यात् एकेनापि देवपादाद्विना न प्रतीपं गन्तव्यम् इति।

"भृत्याः अपि ते एव ये संपत्तेः विपत्तौ सविशेषं सेवन्ते। समुन्नम्यमानाः सुतराम् अवनमन्ति। स्तूयमानाः न उत्सिच्यन्ते। उच्यमाना न प्रतीपं भाषन्ते। अनादिष्टाः कुर्वन्ति। कृत्वा न जल्पन्ति। विकत्थ्यमानाः अपि लज्जाम् उद्वहन्ति। महाहवेषु अग्रतः ध्वजभूता इव लक्ष्यन्ते। दानकाले पलायमानाः पृष्ठतो निलीयन्ते। धनात् स्नेहं बहु मन्यन्ते। जीवितात् पुरः मरणम् अभिवाञ्छन्ति। तत् सर्वः एव अयम् एवं स्थितः भृत्यजनः। देवस्य च स्थाने देवी वर्तते। तत् आज्ञापितं कृतम् अवधारयतु देवी।" इत्युक्त्वा मेघनादः त्वरितकनामानं कुमारबालसेवकम् आहूय तैः सह व्यसर्जयत्।

* * *

## २९ पुत्रशोकः

अथ सबहुदिवसापगमे वार्तया विना उत्ताम्यन्ती चन्द्रापीडस्यैव आगमनाय उपयाचितं कर्तुम् अवन्तीनगरीदेवतानाम् अवन्तिमातॄणाम् आयतनं निर्गता विलासवती। 'देवि, दिष्ट्या वर्धसे, प्रसन्नास्ते अवन्तिमातरः परागताः युवराजवार्ताहराः' इति

ससम्भ्रमप्रधावितात् परिजनात् उपश्रुत्य, तस्मिन्नेव मातृगृहाङ्गणे स्थित्वा तेषाम् आह्वानाय आदिदेश।

अनन्तरं च अतर्कितापतितदर्शनेन उत्पादितद्विगुणदुःखावेगान् निर्जीवितान् इव उपसर्पतः कतिचित् पदानि गत्वा गद्गदस्वरम् अकृतप्रणामान् एव सा अवादीत्। 'भद्राः, कथयत आशु वत्सस्य मे वार्तामात्रम्। ध्रियते मे वत्सः? दृष्टो वा न भवद्भिः?' इत्येवं पृष्टास्तु ते अवनितलनिवेशितोत्तमाङ्गाः, व्यज्ञपयन्। 'देवि, दृष्टः अस्माभिः अच्छोदसरस्तीरे युवराजः। शेषम् एष त्वरितकः निवेदयिष्यति'। इत्येवम् अभिदधतः एव तान् उद्बाष्पमुखी विलासवती प्रत्युवाच।

"किमपरम् अयं तपस्वी निवेदयिष्यति? हा वत्स, चन्द्रापीड, चन्द्रानन, चन्द्रशीतलप्रकृते, किं भूतं ते, येन नायातोऽसि? न युक्तम् एतत् तव 'अम्ब, न विलम्बं मनागपि करोमि' इति तथा मे पुरः प्रतिज्ञाय क्षणमपि अन्यत्र क्वापि अवस्थातुम्। वत्स, गच्छत एव ते मया अस्य हतहृदयस्य शङ्कया एव ज्ञातं दुर्लभं मे वत्सस्य पुनर्मुखावलोकनम् इति। को वाऽत्र दोषो वत्सस्य? मन्दभाग्यायाः मम एव एतानि अपुण्यानां विलसितानि। वत्स, सुदूरस्यापि पादयोः पतामि ते। निवर्तस्व एकवारम्। 'अम्ब' इति आलपतस्ते वदनमालोकयितुम् उत्कण्ठितं मे हृदयम्। न श्रद्दधाति मे हृदयम् अनिष्टं ते, येन न सहस्रधा स्फुटति। स्फुटीकर्तुं च वार्तां भीता ते त्वरितकोपनीतामेव नेच्छामि। वरम् अनाकर्ण्य एव अश्रवणीयम् उपरता अस्मि" इति अभिदधाना एव मोहमगात्।

अथ विलासवतीपरिजनेन आवेदिते तस्मिन् वृत्तान्ते, ससम्भ्रमम् उत्थाय करेणुकाम् आरुह्य आर्यशुकनासद्वितीयः, आपिबन् इव पुरो राजमार्गम् निर्जगाम नरपतिः। उपेत्य च अवन्तिमातृकागृहं, परि-

जनेन मलयजजलैः सिञ्चता, कदलीदलैश्च वीजयता, कथंकथमपि चेतनां प्रतिपाद्यमानां विलासवतीमपश्यन्। दृष्ट्वा च समुपविश्य पार्श्वे, शनैः बाष्पगद्गदम् अवादीत्। 'देवि, किमर्थम् अयम् आत्मा वत्सस्य कृते तुच्छतां नीयते? इयन्ति शुभानि उपात्तानि कर्माणि। न अतोऽधिकस्य सुखस्य भाजनं वयम्। वत्सस्य अङ्कगतस्य मुखं अवलोकितम्। रेणुधूसरशरीरस्य अङ्के लगतः स्पर्शसुखमनुभूतम्।' अव्यक्तमनोहारीणि प्रथमजल्पितानि श्रोत्रे कृतानि। गृहीतविद्यस्य गुणवत्तया आनन्दितं हृदयम्। दिग्विजयादागतस्य प्रणमतः परिष्वक्तान्यङ्गानि। एतावदेव मनोरथशतवाञ्छितस्य वस्तुनः न सम्पन्नं, यद्वधूसमेतस्य निजपदे प्रतिष्ठां कृत्वा तपोवने गन्तव्यम्। **सर्वाभिवाञ्छितप्राप्तिस्तु महतः पुण्यराशेः फलम्।** अपरमपि, किं वृत्तं वत्सस्य, एतत् अद्यापि न परिस्फुटं केनचित् अत्र कथितम्। वत्सस्य मे बालसेवकः त्वरितक आयातः। स वेत्ति सर्वं वृत्तान्तम्। सोऽपि त्वया न पृष्ट एव। तं तु तावत् पृच्छामः।'

इत्यभिधाय त्वरितकमाहूय तम् आदिष्टवान्। 'भद्र, कथय किं वृत्तम् वत्सस्य। येन अनागमनकारणमपि न किञ्चित् लिखितवान्' इति। स तु एवम् आदिष्टः राज्ञा, गमनतः प्रभृति यथावृत्तम् कथयितुमारेभे। राजा तु चन्द्रापीडहृदयस्फुटनवृत्तान्तम् आकर्ण्य आर्तस्वरः त्वरितकमवादीत्।

'भद्र विरम, त्वया कथितं सम्प्रति कथनीयम्। मयापि श्रुतं यच्छ्रोतव्यम्। निवृत्तं श्रवणकौतुकम्। आनन्दितं हृदयम्। हा वत्स, निर्व्यूढा त्वया वैशम्पायनस्य उपरि प्रीतिः। देवि, तत् उत्तिष्ठ। यावदेव अतिदूरं न प्रयाति एकाकी वत्सः, तावदेव अनुगमनाय प्रयतावहे। आः शुकनास, किमद्यापि तिष्ठसि? समादिश परिचारकान् चितारचनाय। दापय अशेषम् द्विजेभ्यः कोशम्।

कस्य कृते अद्यापि प्रतिपाल्यते ?' एवम् आर्तप्रलापिनम् तारापीडं त्वरितको व्यज्ञापयत्। 'देव, स्फुटितेऽपि हृदये ध्रियते शरीरेण युवराजः। शापदोषात् वैशम्पायनस्य च यथा जन्म तथा निरवशेषं शृणोतु तावत् देवः' इति।

तारापीडस्तु तद् अद्भुतमाकर्ण्य दत्तावधानः, तेन कथ्यमानं यथादृष्टं, यथाश्रुतं च तत्सर्वमश्रौषीत्। श्रुत्वा च निरतिशयशोक-कारकं विस्मयास्पदभूतं च युवराजवैशम्पायनयोः वृत्तान्तं, दृशं शुकनासमुखे न्यपातयत्। सुहृदस्तु स्वयं दुःखिताः अपि विस्मृत्य आत्मदुःखं सुहृद्दुःखापनोदाय एव यतन्ते, यतः शुकनासः तदवस्थोऽपि स्वस्थवत् अवनिपातिम् उवाच।

'देव, विचित्रे अस्मिन् संसारे, कर्मणां शुभाशुभानां विपाकात्, स्थावरजङ्गमस्य न कदाचिदवस्था सा या न सम्भवति। सर्वेष्वेव पुराणेषु रामायणमहाभारतादिषु च सन्ति अनेकप्रकारकाः शाप-वार्ताः। तद्यथा। महेन्द्रपदवर्तिनः नहुषस्य राजर्षेः अगस्त्यशाप्र-दोषात् अजगरता। त्रिशङ्कोश्च पितृशापात् चाण्डालभावः। तिष्ठतु तावदन्यः एव। अयम् आदिदेवः भगवान् अजः दशरथस्य आत्म-जताम् उपगतः, तत् मनुष्येषु देवतानाम् उत्पत्तिः नैव असम्भा-विनी। अपि च गर्भारम्भसम्भवे देवेन देव्याः वदने विशंश्चन्द्रमाः एव दृष्टः। तथा ममापि स्वप्ने पुण्डरीकस्य एव दर्शनमुपजातम्। तत् उत्पत्तिं प्रति तयोः नास्त्येव सन्देहः। विनष्टयोः शरीरस्य अविनाशः कथं, कथं वा पुनर्जीवितप्रतिलम्भः, इत्यत्र अमृतमेव कारणम् आवेदितम्। तच्च चन्द्रमसि वर्तते। तत् च सर्वम् एतत् इत्थम् एव अवगच्छतु देवः। शापावसाने चन्द्रापीडनाम्नान्तरितस्य चन्द्रमसः दर्शनेन सन्तापं परित्यक्ष्यति देवः। तत्तयोः अयं शापः अस्माकं पुनः वर एव। तत् अस्मिन् वस्तुनि मनागपि न देवेन देव्या वा शोकः कार्यः। अभिमतदेवताराधनेन कुशलम् अभिवर्ध्यताम्।'

इत्युक्तवति शुकनासे सशोकः एव राजा प्रत्यवादीत्। 'सर्वम् एतत्, यत् आर्येण अभिहितं, कोऽन्यो बुध्यते? केन वा अपरेण वयं परिबोधनीयाः? किं तु तत् वत्सस्य मे वैशम्पायनदुःखात् स्फुटनम् हृदयस्य अग्रतः दृष्टिलग्नम्। तदेव पश्यामि। तदेव शृणोमि। तत् गमनात् ऋते अन्यः उपायः नास्ति जीवितसन्धारणाय' इत्येवम् अवधारयतु आर्यः।

* * *

## ३० सर्वेऽपि प्रतिष्ठन्ते

अथ राजा सह विलासवत्या शुकनासेन च प्रलघुपरिकरः अच्छोदाभिमुखं प्रतस्थे। स तु पिबन्निव पन्थानम् एकदिवसेनैव परापतितुम् ईहमानः, कियति अध्वनि अद्यापि वर्तामहे, कतिपयैः दिवसैः परापतामः, इति मुहुर्मुहुः त्वरितकं पृच्छन्, अबहुभिरेव दिवसैः आससाद अच्छोदम्।

तत्र शुकनासावलम्बितशरीरः राजा विवेश आश्रमपदम्। तदनु मनोरमावलम्बितशरीरा प्रविश्य 'क मे वत्सः?' इति अवदत् विलासवती। अथ सहजया एव कान्त्या विरहितम् सुप्तमिव चन्द्रापीडमालोक्य, 'जात, चिरात् दृष्टोऽसि, देहि मे प्रतिवचनम्, वत्स, केन रोषितोऽसि?। चन्द्रापीड, पादयोः निपत्य प्रणम तावत् अतिदूरमागतस्यापि पितुः पादौ। क सा गता ते गुरुजनभक्तिः?' इति कृतार्तप्रलापा, पुनः पुनः कपोलौ चुम्बित्वा चन्द्रापीडस्य, उन्मुक्तकण्ठं अरोदीत्।

तथा रुदतीं तु तारापीडः दोर्भ्याम् अवलम्ब्य अब्रवीत्। 'देवि, यद्यपि आवयोः सुकृतैः अपत्यताम् उपगतः, तथापि देवतामूर्तिः

अयम् अशोचनीयः। अस्मिन् शोके कृते न किञ्चिदपि भवति। केवलं गलः एव स्फुटाति रटतः, न हृदयम्। नयनजलमेव पतति, न शरीरम्। अपरम् अस्याम् अवस्थायाम् आवाभ्यामपि तावत् मनोरमा शुकनासश्च सन्धारणीयौ, ययोः लोकान्तरितः वैशम्पायनः। तिष्ठतां तावत् एतौ अपि। इयं वधूः ते अस्मदागमनशोकोर्मिमूढा अद्यापि संज्ञां न लभते। तत् एनां तावत् उत्थाप्य अङ्के कृत्वा चेतनां लम्भय। ततो यथेच्छं रोदिष्यसि।'

इति अभिहिता राज्ञा विलासवती 'क सा मे वत्सस्य वधूः?' इति अभिदधाना च उपसृत्य 'समाश्वसिहि मातः, त्वया विना अद्य यावत् केन सन्धारितं वत्सस्य मे चन्द्रापीडस्य शरीरम्? मातः, त्वम् अमृतमयीव जातासि, येन वत्सस्य पुनर्वदनमालोकितम्' इति अवादीत्। कादम्बरी तु तेन चन्द्रापीडनामग्रहणेन लब्धसंज्ञा, लज्जावनम्रमुखी, अकरोत् वन्दनां गुरूणाम्। 'आयुष्मति, दीर्घकालम् अविधवा भव' इति कृताशीर्वादः राजा मदलेखाम् आहूय आदिदेश। 'दर्शनसुखम् अस्माभिः आसादितम्। किम् अस्माभिः अत्र स्थितैर्गतैर्वा? यस्याः करस्य सङ्गेन एतत् अविनाशि शरीरम्, सैव वधूः पार्श्वेऽस्य तिष्ठतु' इत्यादिश्य निर्जगाम।

निर्गत्य च तरुलतामण्डपे समुपविश्य सकलमेव राजचक्रमाहूय सबहुमानम् अवादीत्। 'भवद्भिः अवगन्तव्यम् यथा अद्य शोकावेशात् एतदहम् अङ्गीकरोमि इति। पूर्वचिन्तितः एव अयम् अर्थः, यथा वधूसमेतस्य चन्द्रापीडस्य वदनमालोक्य संक्रामितानिजभरेण मया क्वचिदाश्रमपदे गत्वा पश्चिमं वयः एवं क्षपितव्यमिति। स च अयं मे अर्थः पुराकृतैः कर्मभिः विरूपैः एवं समुपनमितः। **अनतिक्रमणीया नियतिः**। अप्रापणीयं वत्सस्य सुखम्। प्रजापरिपालनफलं तु पुनः भवद्भुजेषु अविरहितम् अस्त्येव। तत्

इच्छामि चिरकाङ्क्षितम् मनोरथं पूरयितुम् । धन्याश्च ते ये जरापीतसारतनवः तनयेषु आत्मभरं आसज्य लघुशरीराः परलोकगमनं साधयन्ति ।'

इत्युक्त्वा सन्निहितान्यपि परित्यज्य सर्वसुखानि, अङ्गीकृत्य अन्यानि तपोवनदुःखानि, तथा हि हर्म्यबुद्धिं वृक्षमूलेषु, अन्तःपुरप्रीतिं लतासु, संस्तुतजनस्नेहं हरिणकेषु, निवसनरुचिं चीरवल्कलेषु, आहारहार्दं कन्दमूलफलेषु, नर्मालापं धर्मसंकथासु, शस्त्रधारणव्यसनं अक्षसूत्रे, कोशस्पृहां तपसि, आज्ञां मौने, तनयस्नेहं तरुषु संक्रमय्य तपस्विजनोचिताः क्रियाः कुर्वन्, सायम्प्रातश्च अनुभूतचन्द्रापीडदर्शनसुखः, नरपतिः सपरिवारः, समं देव्या, शुकनासेन च तत्रैव अतिष्ठत् ।

* * *

## तृतीयो विभागः

### ३१ शुकशावकः

अस्ति पूर्वापरजलनिधिवेलावनलग्ना, मध्यदेशालङ्कारभूता मेखलेव भुवः, पादपैः उपशोभिता, विराजिता लतामण्डपैः, क्रूरसत्त्वापि मुनिजनसेविता पवित्रा विन्ध्याटवी नाम अरण्यानी। तस्यां च एकदेशे दण्डकारण्ये, उत्पत्तिक्षेत्रमिव धर्मस्य, पीतसकलसागरजलस्य भगवतो महामुनेः अगस्त्यस्य आश्रमपदम् आसीत्। यत्र च दशरथवचनम् अनुपालयन्, उत्सृष्टराज्यः, रामो लक्ष्मणेन सीतया च सह पञ्चवट्याम् कञ्चित् कालं सुखम् उवास।

आसीत् तस्य च एवम्विधस्य अगस्त्याश्रमस्य नातिदूरे, अगाधम् अप्रतिमं पम्पाभिधानं सरः। यद्रूपेण किल जलनिधिपानप्रकुपितवरुणप्रोत्साहितेन अगस्त्यमत्सरात् तदाश्रमसमीपे अपरः इव वेधसा जलनिधिः उत्पादितः। तस्यैव पद्मसरसः पश्चिमे तीरे अधिपतिरिव दण्डकारण्यस्य, नायकः इव सर्ववनस्पतीनां, सखा इव विन्ध्यस्य महान् जीर्णः शाल्मलीवृक्षः।

तत्र च शाखाग्रेषु कोटरोदरेषु विरचितकुलायसहस्राणि नानादेशसमागतानि शुकशकुनिकुलानि प्रतिवसन्ति स्म। ते च शुकादयः तस्मिन् वनस्पतौ अतिवाह्य रजनीम् आत्मनो नीडेषु, प्रतिदिनम् उत्थायोत्थाय आहारान्वेषणाय नभसि विचरन्ति स्म। कृताहाराश्च पुनः प्रतिनिवृत्य, शावकेभ्यो विविधफलरसान् चञ्चुपुटेन दत्त्वा, क्षपाः क्षपयन्ति स्म।

एकस्मिन् जीर्णकोटरे जायया सह निवसतः पश्चिमे वयसि वर्तमानस्य कस्यचित् शुकस्य एकः विधिवशात् सूनुः अभवत्। तत्पत्नी तु प्रसववेदनया लोकान्तरम् अगमत्। जायाविनाशशोक-

दुःखितोऽपि शुकः एकाकी सुतसंवर्धनपरोऽभूत्। अतिपरिणतवयाश्च चञ्चुपुटेन परनीडनिपतितान् तण्डुलकणान्, आदाय, तरुमूलनिपतितानि फलशकलानि च समाहृत्य परिभ्रमितुम् अशक्तः तस्मै आहारमददात्। प्रतिदिवसं स्वयं च तदुपभुक्तशेषम् अकरोत् अशनम्।

एकदा तु प्रत्यूषसि सहसा एव तस्मिन् महावने मृगयाकोलाहलध्वनिः उदचरत्। 'इतो मृगकदम्बकम्, इतो वनगजकुलम्, इतो वनवराहयूथम्, विमुच्यन्तां श्वानः' इति अन्योन्यम् अभिवदतः मृगयासक्तस्य महतो जनसमूहस्य कोलाहलम् आकर्ण्य स्वनीडावस्थितः स शुकशावकः भयविह्वलः जातवेपथुः, समीपवर्तिनः पितुः पक्षपुटान्तरम् अविशत्।

अचिराच्च प्रशान्ते तस्मिन् मृगयाकलकले, स कोटरस्थः एव शिरोधरां प्रसार्य 'किम् इदम्? इति' समुपजातविस्मयः, दिदृक्षुः, तामेव दिशम् चक्षुः प्राहिणोत्। अभिमुखम् आपतितम् च शबरसैन्यमद्राक्षीत्। मध्ये च तस्य, प्रथमे वयसि वर्तमानम्, अतिकर्कशत्वात् आयसम् इव, सहोदरम् इव पापस्य, शबरसेनापतिम् अपश्यत्। मातङ्गकः इति तस्य अभिधानम् तु पश्चात् सः अश्रौषीत्।

स सेनापतिः, कैश्चित् केसरिकृत्तिधारिभिः, कैश्चित् मयूरपिच्छधारिभिः, कैश्चित् गृहीतपिशितभारैः, कैश्चित् विधृतगजदन्तैः, शबरवृन्दैः परिवृतः आसीत्।

आसीच्च शुकशावकस्य मनसि। 'अहो साधुजनगर्हितं चरितम् एतेषाम्! पुरुषपिशितोपहारे धर्मबुद्धिः, आहारः साधुजनगर्हितः मधुमांसादिः, प्रज्ञा शकुनिज्ञानम्, परिचिताः श्वानः, मित्राणि धनूंषि, सहायाः सायकाः, चौर्येण जीवनम्' इति चिन्त-

यत्येव तस्मिन्, शबरसेनापतिः श्रमम् अपानिनीषुः तस्यैव शाल्मलीतरोः अधः छायायां पल्लवासने समुपाविशत् । आपीतसलिलश्च अपगतश्रमः, उत्थाय शबरसैन्येन अनुगम्यमानः, शनैः शनैः अभिमतम् दिगन्तरम् अयासीत् ।

एकतमस्तु जरत् शबरः, पिशितार्थी तस्मिन्नेव तरुमूले मुहूर्तमिव व्यलम्बत । स भीषणया दृष्ट्या गणयन्निव शुककुलकुलायस्थानानि, आरुरुक्षुः तं वनस्पतिम् आ मूलात् अपश्यत् । **किमिव हि दुष्करम् अकरुणानाम् ?** यतः सः तं सोपानैः इव अयत्नेनैव पादपम् अधिरुह्य, फलानीव तस्य वनस्पतेः, कोटरान्तरेभ्यः शुकशावकान् अग्रहीत्, अपगतासूंश्च कृत्वा, क्षितौ अपातयत् । मुहुर्मुहुः दत्तचञ्चुप्रहारम् उत्कूजन्तं तं शुकशावकस्य तातमपि अपगतासुम् अकरोत् । परं तस्य तत्पक्षपुटान्तरगतं शावकं नालक्षयत् ।

स शावकः उपरतेन तातेन सह शुष्कपर्णराशेः उपरि आत्मानं निपतितं अपश्यत् । आयुषः अवशिष्टतया तु अङ्गानि तस्य न अवाशीर्यन्त । यावच्च असौ तस्मात् तरुशिखरात् न अवतरति, तावत् स शिशुः पितरं उपरतं उत्सृज्य, भयेनैव लुठन् इतस्ततः नातिदूरवर्तिनः तमालविटपिनः मूलदेशमाविशत् । अवतीर्य च तेन समयेन क्षितितलविप्रकीर्णान् संहृत्य तान् शुकशिशून् अतित्वरितगमनः सेनापतिगतेन एव वर्त्मना तामेव दिशम् अन्वगच्छत् ।

अथ स शुकशिशुः पिपासया बाध्यमानः तस्मात् तमालतरुमूलात् सलिलसमीपम् उपसर्तुं प्रयत्नम् अकरोत् । 'मुहुर्मुहुः मुखेन पततः तस्य अभूत् मनसि । **अतिकष्टासु दशासु अपि जीवितनिरपेक्षाः न भवन्ति खलु जगति प्राणिनां वृत्तयः । नास्ति जीवितात् अन्यत् अभिमततरम् इह जगति जन्तूनाम् ।** एवम् उपरते अपि तातें, यद् अहम् अविकलेन्द्रियः पुनः एव

प्राणिमि। धिङ् माम् अकरुणम्, अतिनिष्ठुरम् अकृतज्ञम्। खलं हि खलु मे हृदयम्। मया हि परिणतवयसापि तातेन संवर्धनक्लेशं महान्तमपि अगणयता यत् परिपालितः तत् सर्वम् एकपदे विस्मृतम्। मन्ये निर्घृणतया एव केवलम् इयं मम सलिलपानबुद्धिः। अद्यापि दूरत एव सरस्तीरम्। सीदति पुनः मे हृदयम्। अन्धकारताम् उपयाति चक्षुः। अपि नाम खलो विधिः अनिच्छतः अपि मे मरणम् अद्यैव उपपादयेत्!

* * *

## ३२ जाबालेराश्रमः

तस्मात् सरसः नातिदूरवर्तिनि तपोवने जाबालिर्नाम महातपा मुनिः प्रतिवसति स्म। तत्तनयश्च हारीतनामा मुनिकुमारकः, जटानां निकरेण उपेतः, कमण्डलुना अध्यासितवामकरतलः, यज्ञोपवीतेन उद्भासमानः, सवयोभिः अपरैः तपोधनकुमारकैः अनुगम्यमानः, तदेव सरः सिष्णासुः उपागमत्।

**प्रायेण अकारणमित्राणि अतिकरुणार्द्राणि सदा खलु भवन्ति सतां चेतांसि।** यतो हारीतः तदवस्थम् आलोक्य तं शुकशिशुम् समुपजातकरुणः, समीपवर्तिनं ऋषिकुमारकम् अन्यतमम् अब्रवीत्। 'अयं कथमपि शुकशिशुः असञ्जातपक्षपुटः एव तरुशिखरात् अस्मात् परिच्युतः। श्येनमुखपरिभ्रष्टेन वा अनेन भवितव्यम्। तथा हि अस्य अल्पशेषं जीवितम्। न शक्नोति शिरोधरां धारयितुम्। तद् एहि, यावदेव अयम् असुभिः न विमुच्यते, तावदेव गृहाण एनम्, अवतारय सलिलसमीपम्।' इत्यभिधाय तेन तं सरस्तीरम् अनाययत्। उपसृत्य च जलसमीपम् एकदेशनिहित-

दण्डकमण्डलुः स्वयं तम् अङ्गुल्या कतिचिन् सलिलबिन्दून् अपाययत्। उपजातनवीनप्राणं च तं छायायां निधाय समुचितम् अकरोत् स्नानविधिम्। अभिषेकावसाने भगवते सवित्रे दत्त्वा अर्घ्यम् उदतिष्ठत्। आगृहीतधवलवल्कलश्च कमण्डलुम् आपूर्य, सकलेन तेन मुनिकुमारकदम्बकेन अनुगम्यमानः, तं शुकशिशुं गृहीत्वा तपोवनाभिमुखं शनैः शनैः अगच्छत्। अनतिदूरम् इव गत्वा स शुकशिशुः मुक्तकुसुमैः अभ्यर्च्यमानम् इव पादपैः, सततविर्भूतहव्यधूमगन्धं, पठ्यमानविविधपुस्तकं, विचार्यमाणसकलशास्त्रार्थम्, अतिरमणीयम् आश्रमम् अपश्यत्। यत्र च मलिनता हविर्धूमेषु, न चरितेषु; तीक्ष्णता कुशाग्रेषु, न स्वभावेषु; चञ्चलता कदलीदलेषु, न मनःसु। तस्य च एवम्विधस्य आश्रमस्य मध्यभागमण्डलम् अलङ्कुर्वाणस्य अशोकतरोः अधः छायायाम् उपविष्टं, स्थैर्येण अचलानां, गाम्भीर्येण सागराणां, तेजसा सवितुः, निर्मलतया अम्बरतलस्य संविभागमिव कुर्वाणं, भगवन्तं जाबालिमपश्यत्।

अवलोक्य च सोऽचिन्तयत्–'अहो प्रभावस्तपसाम्! **पुण्यानि हि नामग्रहणान्यपि महामुनीनाम्, किं पुनर्दर्शनानि?** धन्यम् इदम् आश्रमपदम् अयम् अधिपतिर्यत्र। सर्वतेजस्विनाम् अयम् अग्रणीः। एष प्रवाहः करुणारसस्य, सागरः सन्तोषामृतरसस्य, दिवसकरो मोहान्धकारस्य, दर्शकः सत्पथानाम्, सखा सत्यस्य। अहो प्रभावो महात्मनाम्! अत्र हि शाश्वतिकम् अपहाय विरोधं, तिर्यञ्चोऽपि तपोवनवसतिसुखम् अनुभवन्ति।

एवं चिन्तयन्तम् एव तं तस्याम् एव अशोकतरोः छायायाम् एकदेशे स्थापयित्वा हारीतः कृताभिवादनः पितुः समीपवर्तिनि कुशासने समुपाविशत्। आलोक्य तु शुकशिशुं सर्वे एव मुनयः 'कुतः अयम् आसादितः शुकशिशुः?' इति तम् आसीनमपृच्छन्।

असौ तु तान् अब्रवीत् ‘अयं मया स्नातुम् इतो गतेन सरस्तीरतरु-नीडनिपतितः जातदयेन आनीतः। तत् यावत् अयम् अक्षमः अन्तरिक्षम् उत्पतितुं, तावत् अत्रैव कस्मिंश्चित् आश्रमतरुकोटरे धारयतु जीवितम्। अनाथपरिपालनं हि धर्मः अस्मद्विधानाम्। इत्येवमादिकं शुकसंबद्धम् आलापम् आकर्ण्य, किञ्चिदुपजातकुतूहलः, भगवान् जाबालिः, तं पुनः पुनः विलोक्य ‘स्वस्य एव अविनयस्य फलम् अनेन अनुभूयते’ इत्यवोचत्। स हि भगवान् जाबालिः कालत्रय-दर्शी तपःप्रभावात् दिव्येन चक्षुषा सर्वमेव करतलगतमिव जगत् अवलोकयति स्म। अवादीत् जन्मान्तराणि अतीतानि। अकथयच्च आगामिनमपि अर्थम्।

अथ सर्वा एव सा तापसपरिषद् तद् जाबालिवचनं श्रुत्वा ‘कीदृशः अनेन अविनयः कृतः? क वा कृतः? जन्मान्तरे वा कोऽयम् आसीत्?’ इति कुतूहलिनी अभवत्। असकृत् उपयाचितवती च तं भगवन्तम्। ‘आवेदय, प्रसीद भगवन्, विहगजातौ कथमस्य सम्भवः? किमभिधानो वा अयम्? अपनयतु भगवान् नः कुतूहलम्’ इति—

एवं उक्तः स महामुनिः, तान् सर्वान् एकाग्रान् श्रवणपरान् मुनीन् बुद्ध्वा शनैः अब्रवीत् ‘श्रूयतां यदि कुतूहलम्—

अयम् श्वेतकेतुपुत्रः पुण्डरीकः। असौ स्वयंकृतात् एव अविनयात् चन्द्रस्य शापात् दिव्यलोकतः परिभ्रश्य मर्त्यलोके उज्जयिन्यां वैशम्पायननामा शुकनाससूनुः अभवत्। स एव एषः पुनः स्वयंकृतेन अविनयेन कोपितस्य पितुः शुकनासस्य आक्रोशात्, महाश्वेताकृताच्च शापात् अस्यां शुकजातौ पतितः।’ इत्येवं विस्तरशः वदत्येव भगवति जाबालौ, बाल्येऽपि तस्य शुकशिशोः सुप्तप्रबुद्धस्य इव पूर्वजन्मान्तरोपात्ताः समस्ताः एव विद्या जिह्वाग्रे अभवन्। मनुजस्य इव भारती संवृत्ता। सर्ववस्तुविषयं स्मरणं च

संवृत्तम् । किं बहुना? मनुष्यशरीरात् ऋते सर्वम् अन्यत् तत्क्षणमेव संवृत्तम् । स एव चन्द्रापीडस्य उपरि स्नेहः । स एव महाश्वेतायाम् अनुरागः । तथा च आविर्भूतसकलान्यजन्मवृत्तान्तः समुत्सुकान्तरात्मा, किं वृत्तं मातापित्रोः, किं तातस्य तारापीडस्य, किम् अम्बायाः विलासवत्याः, किं वयस्यस्य चन्द्रापीडस्य, उत प्रथमसुहृदः कपिञ्जलस्य, आहोस्वित् महाश्वेतायाः इति नाज्ञासीत् । तथा च निजाविनयश्रवणलज्जया विशन्निव पातालं कथमपि शनैः शनैः व्यज्ञापयत् ।

'भगवन्, त्वत्प्रसादात् आविर्भूतज्ञानोऽस्मि संवृत्तः । स्मृताः खलु मया सर्वे एव पूर्वबान्धवाः । मूढतायां च यथैव तेषां स्मरणं नासीत्, तथैव न विरहपीडापि । अधुना पुनः तान् स्मृत्वा स्फुटति इव मे हृदयम् । तत् चन्द्रापीडस्य जन्माख्यानेन प्रसादं करोतु भगवान्, येन अयं तिर्यग्योनिनिवासोऽपि मे तेन सह एकत्र वसतः न पीडाकरः सञ्जायते' इति ।

एवं च विज्ञापितो भगवान् जाबालिः सस्नेहकोपगर्भं प्रत्यवादीत्– 'दुरात्मन्, यया एतावतीं दशाम् उपनीतोऽसि कथं तामेव तरलहृदयताम् अनुबध्नासि? । अद्यापि पक्षावपि न उद्भिद्येते । तत् संचरणक्षमस्तु तावत् भव । ततो मां प्रक्ष्यसि ।'

इत्येवमुक्ते भगवता समुपजातकुतूहलः हारीतः पप्रच्छ– 'तात, महानयं विस्मयो मे । कथय कथम् अस्य दिव्यलोकसम्भूतस्य स्वल्पम् आयुः संवृत्तम्?' इत्येवं पृष्टः सूनुना भगवान् जाबालिः प्रत्यवादीत्– 'स्पष्टमेवात्र कारणम् । लोके च प्रायः कारणगुणभाञ्जि एव कार्याणि दृश्यन्ते । मरणं च अस्य इन्द्रियनिग्रहाभावात् अविनयात् च उपनतम् । अधुना शुकजातौ अपि तादृशः एव अल्पायुः अयम् । शापावसानोत्तरकालम् अस्य अक्षयेण आयुषा योगो भविष्यति' इति ।

एतत् श्रुत्वा स शुकशिशुः पुनः अवनितलनिवेशितशिराः भगवन्तं व्यज्ञापयत्। 'भगवन्, अहम् अपुण्यवान् अस्यां तिर्यग्योनौ सर्वस्य एव कार्यस्य अक्षमः। वागपि मे भगवतः प्रसादात् सम्प्रत्येव आनने सम्भूता। शरीरं पुनः केन कारणेन अक्षयं भविष्यति तन्मे आज्ञापयतु भगवान्।' इत्येवं विज्ञापितस्तु भगवान् जाबालिः आज्ञापितवान् 'एतदपि यथा वर्तते तथा ज्ञास्यसि एव। आस्तां तावत् इयं कथा। रसाक्षेपात् अचेतिता एव अस्माभिः प्रभात-प्राया रजनी।'

इत्यभिधाय उत्थिते भगवति जाबालौ, समस्ता एव सा तपस्वि-परिषद् विस्मयोत्फुल्लमुखी यथास्थानं जगाम।

* * *

## २३ शुक–कपिञ्जलौ

हारीतस्तु तं शुकशिशुं निजकरेण एव उत्क्षिप्य, आत्मपर्णशालां नीत्वा शनैः वेदिदेशे स्थापयित्वा प्राभातिकक्रियाकरणाय निर्ययौ। निर्गते च तस्मिन् स शुकः तिर्यग्जातिपतनेन पीडितान्तरात्मा चिन्तां प्राविशत्। 'अत्र तावत् अनेकभवसुकृताधिगम्यं मानुष्यमेव दुर्लभम्। तत्रापि अपरं, सकलजातिविशिष्टं ब्राह्मण्यम्। ततोऽपि मुनित्वम्। तस्यापि दिव्यलोकनिवासित्वम्। तत् येन एतावतः स्थानात् स्वदोषैः आत्मा पातितः, सः कथम् अधुना तिर्यग्जातेः समुद्धृतः स्यात्? निष्प्रयोजनेन अमुना जीवितेन किम् मे परि-रक्षितेन? पततु यत्र तत्र क्वापि इदं शरीरम्। परित्यजामि एतत्।'

इत्येवं जीवितपरित्यागचिन्तानिमीलितं तं समुच्छ्वासयन् इव विकासहासिना मुखेन सहसा प्रविश्य हारीतः अभ्यधात्। 'भ्रातर्

वैशम्पायन, दिष्ट्या वर्धसे। पितुस्ते भगवतः श्वेतकेतोः पादमूलात् कपिञ्जलः त्वामेव अन्विष्यन् आयातः' इति। शुकस्तु तच्छ्रुत्वा तत्क्षणेन उत्पन्नपक्षः इव उत्पत्य, तत्समीपम् एव प्राप्तुम् अभिवाञ्छन्, 'क्वासौ?' इति तम् अप्राक्षीत्। एवं वदन्नेव अग्रतः कपिञ्जलम् अद्राक्षीत्। कपिञ्जलस्तु तं करद्वयेन उत्क्षिप्य, वक्षसि निवेश्य, चिरम् आलिङ्गनसुखं किल अनुभूय इतरवन् अरोदीत्। तथा रुदन्तं तु तं शुकोऽवदत्। 'सखे कपिञ्जल, मम पापात्मनः इदं (रुदनं) युज्यते, यत् त्वया प्रारब्धम्। त्वं पुनः बालोऽपि न स्पृष्टः एव अमीभिः रागादिभिः। तत्किमनेन मूढजनगतेन वर्त्मना? समुपविश्य कथय। अपि कुशलं तातस्य? स्मरति वा माम्? दुःखितो वा मदीयेन दुःखेन? मद्वृत्तान्तम् आकर्ण्य किम् उक्तवान्? कुपितो न वा?' इति।

स तु एवम् उक्तः पल्लवासने समुपविश्य आख्यातवान्। "सखे, कुशलं तातस्य। अयं च अस्मद्वृत्तान्तः प्रथमतरम् एव तातेन दिव्येन चक्षुषा दृष्टः। दृष्ट्वा च प्रतिक्रियायै कर्म प्रारब्धम्। समारब्धे एव कर्मणि, तुरगभावात् विमुक्तः, गतोऽस्मि तातस्य पादमूलम्। आलोक्य माम् आहूय आज्ञापितवान्। 'वत्स कपिञ्जल, महामुनेः जाबालेः आश्रमपदं सुहृत् ते प्राप्तः। जन्मान्तरस्मरणं च अस्य उपजातम्। तद्गच्छ सम्प्रति तं द्रष्टुम्। मदीयया च आशिषा अनुगृह्य वक्तव्यः असौ। 'वत्स, यावदिदं कर्म परिसमाप्यते, तावत् त्वया अस्मिन्नेव जाबालेः आश्रमे स्थातव्यम्' इति। त्वद्दुःखदुःखितया अम्बया श्रियापि एतदेव पुनः पुनः समादिष्टम्" इति।

ततः शुकः तम् अब्रवीत्। 'सखे कपिञ्जल, त्वया मन्दपुण्यस्य मम कृते तुरगताम् आपन्नेन बहुतराण्येव दुःखानि अनुभूतानि। कथं सोमपानोचितेन अमुना आस्येन खरखलीनक्षतयो विसोढाः? कथम् एषु कुसुमोच्चयस्पर्शमात्रक्षमेषु कशाभिघाताः निपतिताः'

इति। एभिः अन्यैश्च पूर्ववृत्तान्तालापैः, तत्कालविस्मृततिर्यग्जाति-दुःखः सुखमतिष्ठत्।

उपरोहति च मध्याह्नं सवितरि, हारीतः सह कपिञ्जलेन शुकं यथोचितमाहारमकारयत्। कृताहारश्च कपिञ्जलः क्षणमिव स्थित्वा शुकमब्रवीत् "सखे, अहं हि तातेन त्वां समाश्वासयितुं, 'जाबालि-पादमूलात् आ कर्मपरिसमाप्तेः न त्वया चलितव्यम्' इत्येतत् च आदेष्टुं विसर्जितः। अन्यत् अहमपि तत्रैव कर्मणि व्यग्रतरः एव। तत् व्रजामि सम्प्रति इति।" शुकस्तु तत् श्रुत्वा विषण्णवदनः तं प्रत्यवदत्। 'सखे कपिञ्जल, एवं गते किं ब्रवीमि? किं च तातस्य अम्बायाः वा संदिशामि? सर्वं त्वमेव वेत्सि' इति। स तु एवम् उक्तः अन्तरिक्षम् अतिक्रम्य क्वापि अदर्शनम् अगात्।

***

## ३४ चाण्डालकन्यका

अथ हारीतेन संवर्ध्यमानः शुकः कतिपयैः एव दिवसैः सञ्जात-पक्षः अभवत्। उत्पन्नोत्पतनसामर्थ्यश्च चेतसि अकरोत्। 'गमन-क्षमस्तु संवृत्तोऽस्मि। तत्र नाम चन्द्रापीडोत्पत्तिपरिज्ञानम्। महा-श्वेता पुनः सा एव आस्ते। भवतु तत्रैव गत्वा तिष्ठामि।' इति निश्चित्य प्रातर् विहारनिर्गतः एव उत्तरां ककुभं गृहीत्वा अवहत्। अबहुदिवसाभ्यस्तगमनतया अवाशीर्यन्त इव तस्य अङ्गानि श्रमेण अशुष्यत् चञ्चुपुटं पिपासया। तदवस्थश्च सरस्तीरम् अवतीर्य आतृप्तेः पयो निपीय, यथाप्राप्तैः फलैश्च कृत्वा क्षुधः प्रतीकारं, तीर तरुशाखाम् आरुह्य अतिष्ठत्। तथा स्थितश्च अध्वश्रमसुलभ

चिरादिव च लब्धप्रबोधः बद्धमात्मानं तन्तुपाशैः अपश्यत्। अग्रतश्च वर्णे चरिते च कृष्णम्, आशये केशेषु च अस्निग्धम्, निवसने कर्मणि च मलिनं पुरुषमद्राक्षीत्। आलोक्य च तम् आत्मनः उपरि निष्प्रत्याशः एव अपृच्छत्। 'भद्र, कस्त्वम्? किमर्थं वा त्वया बद्धोऽस्मि? यदि आमिषतृष्णया, तत् किमिति सुप्तः एव न व्यापादितोऽस्मि? अथ कौतुकात्, ततः कृतं कौतुकम्। मुञ्चतु माम् इदानीं भद्रमुखः। मया खलु वल्लभजनदर्शनोत्कण्ठितेन दूरं गन्तव्यम्।'

एवमुक्तः स पुरुषः तं प्रत्यवादीत्। "महात्मन्, अहं खलु क्रूरकर्मा जात्या च चाण्डालः। न च मया त्वम् आमिषलुब्धेन कुतूहलिना वा बद्धः। मम खलु स्वामी पक्कणाधिपतिः नातिदूरे कृतावस्थानः। तस्य दुहिता कौतुकमये प्रथमे वयसि वर्तते। तस्याः त्वं केनापि दुरात्मना कथितः, यथा किल 'जाबालेः आश्रमे एवं-गुणविशिष्टः शुकः तिष्ठति' इति। तया च श्रुत्वा उत्पन्नकौतुकया, त्वद्ग्रहणाय बहवः एव अपरे मादृशाः समादिष्टाः। तत् अद्य पुण्यैर्मया आसादितोऽसि। त्वामहं तत्पादमूलं नयामि। बन्धे मोक्षे च अधुना सा ते प्रभवति" इति।

शुकस्तु तत् श्रुत्वा अशनिना इव ताडितः शिरसि, चेतसि अकरोत्। "अहो, मे मन्दभाग्यस्य दारुणतरः कर्मणां विपाकः येन मया श्रियः जातेन, महामुनेः श्वेतकेतोः स्वहस्तसंवर्धितेन दिव्य-लोकाश्रमनिवासिना भूत्वा अधुना पक्कणं प्रवेष्टव्यम्। चाण्डालैः सह एकत्र स्थातव्यम्। मातङ्गाङ्गनाकरोपनीतैः कवलैः आत्मा पोषणीयः। चण्डालबालकजनस्य क्रीडनीयेन भवितव्यम्। दुरात्मन्, पुण्डरीक-हतक, धिक् जन्मलाभं ते। मातः, रक्ष माम् अस्मात् महानरक-पातात्। तात, त्रायस्व कुलतन्तुमेकम्। त्वया एव संवर्धितोऽस्मि।

वयस्य कपिञ्जल, यदि परापत्य त्वया अस्मात् पापात् न मोचितोऽस्मि, तदा जन्मान्तरे अपि पुनर्मा कृथाः मत्समागम-प्रत्याशाम्।" इत्येतानि च अन्यानि च चेतसा विलप्य तं पुनः अवदत्।

"भद्रमुख, जातिस्मरो मुनिरस्मि जात्या। तत् तवापि माम् अस्मात् सङ्कटात् उद्धृत्य धर्मो भवेत्। केनचित् अपरेण अदृष्टस्य मन्मुक्तिकृतः तव प्रत्यवायो नास्त्येव। तत् मुञ्चतु मां भद्रमुखः" इति।

स पुरुषः तु विहस्य तमब्रवीत् 'रे मोहान्ध, यस्य तव एव आत्मशरीरस्थाः शुभाशुभकर्म साक्षिभूताः पञ्च लोकपालाः न पश्यन्ति सः अन्यस्य भयात् अकार्यं नाचरति। तत् नीतः असि मया स्वाम्याज्ञया' इति। एवम् अभिदधानः एव शुकम् आदाय पक्कणाभिमुखमगमत्।

शुकस्तु तेन तद्वचसा मूकतामापन्नः 'केषां पुनः कर्मणाम् इदं मे फलम्!' इति अन्तरात्मना अभिध्यायन् प्राणपरित्यागं प्रति कृतनिश्चयोऽभवत्। नीयमानश्च तथा अग्रतः दत्तदृष्टिः, आकरमिव सर्वनरकाणां, पत्तनमिव सर्वपापानां, स्मर्यमाणमपि भयङ्करं, श्रूयमाणमपि उद्वेगकरं, दृश्यमानमपि पापजननं, मांसमेदोवसाऽसृक्कर्दमप्रायं पक्कणमपश्यत्। दृष्ट्वा च तं तादृशं, समुत्पन्नघृणः अन्तरात्मनि अकरोत्। "अपि नाम सा चाण्डालदारिका दूरतः एव माम् आलोक्य उत्पन्नकरुणा मोचयेत्? न जातिसदृशम् आचरिष्यति? भविष्यन्ति एवंविधानि मे पुण्यानि?" इत्येवं कृताशंसम् एव तं नीत्वा स चण्डालः 'एष स मया प्राप्तः' इति तस्यै चण्डालदारिकायै दर्शितवान्।

सा तु प्रहृष्टतरवदना, 'शोभनं कृतम्' इति तम् अभिधाय तत्करात् स्वकरयुगेन आदाय शुकम् 'आः पुत्रक, प्राप्तोऽसि।

साम्प्रतं क्व अपरं गम्यते? व्यपनयामि ते सर्वमिदं कामचारित्वम्' इति अभिदधाना एव दारुपञ्जरे आक्षिप्य अर्गलितद्वारा सा तं शुकमवदत् यथा 'अत्र निर्वृतः संप्राति तिष्ठ' । इत्याभिधाय तूष्णीमस्थात् ।

शुकस्तु तथा पञ्जरे संरुद्धः चेतसि अकरोत् । 'महासङ्कटे पतितोऽस्मि । यदि तावत् आवेदितात्मावस्थः, मुक्तये विज्ञापयामि, तदा यः एव मे गुणः दोषताम् आपद्यत, बन्धनाय च उपजातः, स एव संवर्धितः भवति । नाहम् अस्याः तनयः, न भ्राता, न च बन्धुः। अथ मौनम् आलम्ब्य तिष्ठामि, गृहीतमौनं कदाचित् निर्वेदात् मुञ्चत्येव । वदंस्तु पुनः न मोक्तव्यः एव अहम् अनया । अपि च यत् दिव्यलोकतो भ्रंशः, यत् मर्त्यलोके जन्म, यत् तिर्यग्योनौ पतनं, यच्च इदम् एवंविधं पञ्जरबन्धदुःखं, सर्वः एव अयम् अनियतेन्द्रियत्वस्य एव दोषः । तत् किम् एकया वाचा? सर्वेन्द्रियाण्येव नियमयामि ।' इति निश्चित्य मौनग्रहणमकरोत् । आलप्यमानः अपि च बलात्, न किञ्चिदपि अवदत् । केवलम् उच्चैः चीत्कारमेव अमुञ्चत् । उपनीतेऽपि च पानाशने, तं दिवसम् अनशनेनैव अत्यवाहयत् ।

अपरेद्युश्च सा चाण्डालकन्यका स्वपाणिना उपनीय नानाविधानि अपक्वानि पक्वानि च फलानि, स्निह्यन्तीव तमवोचत् । "क्षुत्पिपासार्दितानां हि पशुपक्षिणां न भोज्याभोज्यविवेकः । तत् यदि एवंविधः त्वं कोऽपि पूर्वजातिस्मरः अस्मदीयमाहारं परिहरसि, तथापि तिर्यग्जातौ वर्तमानस्य ते, किं वा अभक्ष्यं यन्न भक्षयसि? येन उत्कृष्टतमां जातिं प्राप्य, आत्मना एव ईदृशं कर्म कृतं, येन तिर्यग्योनौ पतितः, स त्वं किम् अपरं विचारयसि? प्रथमम् एव आत्मा न विवेके स्थापितः । अधुना स्वकर्मोपात्तजातिसदृशम् आचरतः ते नास्त्येव दोषः । येषां च भक्ष्याभक्ष्यानियमः अस्ति, तेषामपि आपत्काले प्राणानां सन्धारणम् अभक्ष्योपयोगे-

नापि तावद् विहितम् । किं पुनः त्वादृशस्य? फलानि तु चाण्डाल-हस्तादपि प्रतिगृह्यन्ते एव । तत् किमर्थम् न भक्षयसि अमूनि मुनिजनोचितानि वनफलानि ?" इति ।

शुकस्तु तेन तस्याः चाण्डालजात्यनुचितेन वचसा विवेकेन च विस्मितान्तरात्मा, तथा इति प्रतिपद्य, जीविततृष्णया क्षुत्पिपासोपशमाय अशनाक्रियामङ्गीकृतवान् आसीत् । मौनं तु पुनर्नात्याक्षीत् ।

एवमतिक्रामति काले स शुकः एकदा प्रभातायां यामिन्याम् अद्राक्षीत् कनकपञ्जरे स्थितम् आत्मानम् । सकलमेव तत् पक्कणम् अमरपुरसदृशम् आलोक्य च विस्मितान्तरात्मा, 'किमेतत् सा कुतूहलात् प्रष्टुकामो यावत् न अत्यजत् मौनं, तावत् सा चाण्डाल-कन्यका शुकमादाय मालवदेशाधिपतेः पादमूलं गता ।

* * *

## ३५ राजा शूद्रकः

आसीत् पाकशासन इव अपरः, भुवो भर्ता चक्रवर्तिलक्षणोपेतः, आश्रयो रसिकानां, धौरेयः साहसिकानां, राजा शूद्रको नाम । तस्य वेत्रवत्या सरिता परिगता विदिशाभिधाना पुरी राजधानी आसीत् । यस्मिंश्च राजनि पालयति महीं, चित्रकर्मसु वर्णसंकराः, शास्त्रेषु चिन्ता, शशिकृपाणकवचेषु कलङ्काः, प्रजानामासन् । यस्य च विवाहेषु करग्रहणम्, अनवरतमखाग्निधूमेन अश्रुपातः, तुरङ्गेषु च कशाभिघातः अभूत् ।

असौ शूद्रकः प्रथमे वयसि वर्तमानः, कदाचित् मृगयाव्यापारेण कदाचित् शास्त्रालापेन, कदाचित् आख्यायिकेतिहासपुराणाकर्णनेन सुहृत्परिवृतो दिवसमनयत् ।

एकदा तु राजानम् आस्थानमण्डपगतं प्रतीहारी समुपसृत्य क्षितितलनिहितजानुकरकमला सविनयमब्रवीत्। "देव, दक्षिणापथात् आगता चाण्डालकन्यका पञ्जरस्थं शुकमादाय देवं विज्ञापयति। 'देवः सकलभुवनतलसर्वरत्नानाम् उदधिरिव एकभाजनम्। विहङ्गमश्च अयम् आश्चर्यभूतः, निखिलभुवनतलरत्नमिति कृत्वा आगता अहं देवदर्शनसुखमनुभवितुम्' इति। एतदाकर्ण्य देवः प्रमाणम्" इत्युक्त्वा विरराम।

उपजातकुतूहलश्च राजा समीपवर्तिनां राज्ञाम् अवलोक्य मुखानि, 'को दोषः? प्रवेश्यताम्' इति आदिदेश। अथ प्रतीहारी तां मातङ्गकुमारीं प्रावेशयत्। अवनिपतिस्तु तां पुरुषेण अधिष्ठितपुरोभागां, पञ्जरमुद्वहता चाण्डालदारकेण अनुगम्यमानाम्, अतिशयरूपाकृतिम् अनिमिषलोचनो ददर्श।

दृष्ट्वा च तां जातविस्मयस्य अभूत् मनसि महीपतेः। 'अहो विधातुः अस्थाने रूपनिष्पादनप्रयत्नः! **सर्वथा धिक् विधातारम् असदृशसंयोगकारिणम्!** अतिमनोहराकृतिरपि क्रूरजातिजा।' एवमादि चिन्तयन्तमेव राजानं चाण्डालकन्यका प्रणनाम।

कृतप्रणामायां च तस्यां, स पुरुषः विहङ्गम् आदाय पञ्जरगतम् एव, किञ्चित् उपसृत्य राज्ञे न्यवेदयत् अब्रवीच्च। "देव, विदितसकलशास्त्रार्थः, राजनीतिप्रयोगकुशलः, काव्यनाटकानाम् अध्येता, स्वयं च कर्ता, वैशम्पायनो नाम शुकः अयम्। 'सर्वरत्नानाम् उदधिरिव देवो भाजनम्' इति कृत्वा पक्षिरत्नमेतत् आदाय अस्मत्स्वामिदुहिता देवपादमूलमायाता। तत् अयं शुकः आत्मीयः क्रियताम्" इत्युक्त्वा नरपतेः पुरो निधाय पञ्जरमपससार।

अपसृते च तस्मिन्, विहङ्गराजः राजाभिमुखो भूत्वा, उन्नमय्य

दक्षिणं चरणं, स्पष्टगिरा जयशब्दं कृतवान्। राजानं च उद्दिश्य तद्वीर्यस्तुतिपराम् आर्यामेकां पपाठ।

राजा तु तां श्रुत्वा संजातविस्मयः, सहर्षं शुकमब्रवीत्। "अपनयतु नः कुतूहलम्। आवेदयतु भवान् आदितः प्रभृति आत्मनो जन्म कस्मिन् देशे? भवान् कथं जातः? केन वा नाम कृतम्? का माता? कस्ते पिता? कथं वेदानामागमः? कथं शास्त्राणां परिचयः? कुतः कलाः समासादिताः? किं जन्मान्तरानुस्मरणम्, उत वर-प्रदानम्? अथवा विहगवेषधारी कश्चित् छन्नो निवससि? क्व वा पूर्वमुषितम्? कियद् वा वयः? कथं पञ्जरबन्धः? कथं चाण्डाल-हस्तगमनम्? इह वा कथम् आगमनम्" इति।

शुकस्तु मुहूर्तमिव ध्यात्वा सादरमब्रवीत्। 'देव, महतीयं कथा। यदि कौतुकम् आकर्ण्यताम्।'

इत्यभिधाय स जाबालिकथितम् आत्मनो जन्मद्वयवृत्तान्तं कार्त्स्न्येन आचचक्षे। पुनश्च अब्रवीत्—'का इयं चाण्डालकन्यका, किमर्थं वा अहं बद्धः, किमर्थं वा इह आनीतः इत्यत्र वस्तुनि अहमपि देवः इव अनपगतकौतुकः एव' इति।

राजा तु तत् श्रुत्वा समुपजाताभ्यधिककुतूहलः चाण्डालकन्यकायाः आह्वानाय प्रतीहारीमादिशत्। अचिरादेव प्रविश्य चाण्डालकन्यका राजानम् अभिभवन्तीव धाम्ना, प्रागल्भ्येन बभाषे। "भुवनभूषण, रोहिणीपते, कादम्बरीलोचनानन्दचन्द्र, सर्वः त्वया अस्य दुर्मतेः आत्मनश्च पूर्वजन्मवृत्तान्तः श्रुतः एव। अत्रापि जन्मनि पितुः आज्ञाम् उल्लंघ्य वधूसमीपं प्रस्थितः तदपि अनेन स्वयमेव कथितम्। तदहम् अस्य दुरात्मनः जननी श्रीः। तथाप्रस्थितमेनं दिव्येन चक्षुषा दृष्ट्वा अस्य पित्रा अहं समादिष्टास्मि। '**सर्वः एव हि अविनयप्रवृत्तः अनुतापादिना न निवर्तते**। तदयं ते तनयः

कदाचिदस्याः अपि तिर्यग्जातेः अधस्तात् पतति । तत् यावदिदं कर्म न परिसमाप्यते, तावदेनं मर्त्यलोके एव बद्ध्वा धारय । यथा च अनुतापः अस्य भवति, तथा प्रतिविधेयमस्य’ इति । तत् अस्य विनयाय इदं सर्वं कृतं मया । अधुना तु तत्कर्म समाप्तम् । शापावसानसमयो वर्तते । शापावसाने च युवाभ्यां सममेव सुखिभ्यां भवितव्यम् इति त्वत्समीपमानीतः मया अयम् । अत्रापि यत् चाण्डालजातिः ख्यापिता तत् लोकसंपर्कपरिहाराय । तत् अनुभूयतां सम्प्रति द्वाभ्यामपि सममेव जन्मजराव्याधिमरणादिदुःखबहुले तनू परित्यज्य, यथेष्टजनसमागमसुखम्”। इति अभिदधाना एव सा झटिति क्षितेः गगनम् उदपतत् ।

* * *

## ३६ शापावसानम्

अथ शूद्रकः चाण्डालकन्यकायाः तद्वचनमाकर्ण्य संस्मृतजन्मान्तरः; ‘सखे, वैशम्पायनाख्यपुण्डरीक, दिष्ट्या तुल्यकालमेव आवयोः शापावसानं सञ्जातम्’ इति अभिदधौ । तावता एव क्षणेन कादम्बरीविरहवेदनया तस्य अङ्गानि परवशानि अजायन्त । देहम् उत्सृज्य निर्जग्मुः श्वासमरुतः । पाण्डुतां च वदनलावण्यमयासीत् । तुल्यावस्थश्च अभवत् महाश्वेतोत्कण्ठया वैशम्पायनः ।

तस्मिन् एव च अन्तरे प्रवर्तमाने सुरभिमासे कादम्बरी पर्याकुलितहृदया चन्द्रापीडम् अतिसुरभिशीतलैः स्नापयित्वा अम्भोभिः, कर्पूरकुसुमप्रायैः प्रसाध्य आभरणविशेषैः, जीवन्तमिव कण्ठे जग्राह । चन्द्रापीडस्य तु तेन अमृतसेकाह्लादिना कादम्बरीकण्ठग्रहेण सद्यः सुदूरगतमपि पुनर् जीवितं प्रत्यपद्यत । स सुप्तप्रतिबुद्ध इव कादम्बरीं चिरविरहदुर्बलाभ्यां लोचनाभ्यां पिबन्निव अवादीत् ।

"भीरु, त्यज्यतां भयम् । प्रत्युज्जीवितोऽस्मि तवैव अमुना कण्ठग्रहेण। त्वं खलु अमृतसम्भवात् अप्सरसां कुलात् उत्पन्ना। एतावन्त्येव दिनानि पाणिना ते स्पृश्यमानोऽपि न यत् प्रत्युज्जीवितोऽस्मि तत् शापदोषात्। अद्य तु स मे व्यपगतः शापः। परित्यक्ता सा मया त्वाद्विरहदुःखदायिनी मानुषी शूद्रकाख्या तनुः। अपि च प्रियसख्याः अपि ते महाश्वेतायाः प्रियतमः, मया एव सहविगतशापः सञ्जातः।" इति अभिदधत्येव चन्द्रापीडे अम्बरतलात् अवतरन् अदृश्यत कपिञ्जलकरावलम्बी पुण्डरीकः।

दृष्ट्वा च तं दूरतः एव, कादम्बरी स्वयमेव धावित्वा कण्ठे अग्रहीत् महाश्वेताम्। चन्द्रापीडस्तु पुण्डरीकं परिष्वज्य अब्रवीत्—"सखे पुण्डरीक, यद्यपि प्राग्जन्मसम्बन्धात् जामाता असि, तथापि अनन्तरजन्माहितसुहृत्स्नेहसद्भावेनैव मया सह वर्तितव्यं भवता।" इत्येवं च वदत्येव चन्द्रापीडे चित्ररथहंसौ दिष्ट्या वर्धयितुं केयूरको हेमकूटमगमत्। मदलेखापि धावमाना निर्गत्य मृत्युञ्जयजपव्यग्रस्य तारापीडस्य विलासवत्याश्च पादयोः पतित्वा 'देव, देव्या सह दिष्ट्या वर्धसे, प्रत्युज्जीवितः युवराजः समं वैशम्पायनेन' इति आनन्दनिर्भरम् उच्चैर्जगाद।

राजा तु तुच्छ्रुत्वा हर्षपरवशो विलासवतीं कण्ठे अवलम्ब्य, मदलेखां 'क्व असौ?' इति पुनः पुनः पृच्छन्, सह शुकनासेन तत्रैव आगच्छत्। दृष्ट्वा च तथा पुण्डरीककण्ठे लग्नं चन्द्रापीडम् आनन्दनिर्भरः शुकनासमवादीत् तारापीडः। 'दिष्ट्या न एकाकिना मया तनयप्रत्युज्जीवनसुखम् अनुभूतम्' इति। चन्द्रापीडस्तु तथा हर्षपरवशं पितरमालोक्य चरणयोः अपतत्।

अथ तारापीडः तं तथा प्रणतमभ्यधात्। 'पुत्र, यद्यपि पिता अहं तव शापदोषात् मम पुण्यबलाद्वा सञ्जातः, तथापि जगद्वन्द्-

नीयो लोकपालस्त्वम् । त्वमेव नमस्कार्यः ।' विलासवती तु चन्द्रापीडं पुनः पुनः शिरसि, पुनर्ललाटे, पुनश्च कपोलयोः चुम्बित्वा गाढतरं सुचिरम् आलिलिङ्ग । उन्मुक्तश्च मात्रा चन्द्रापीडः उपसृत्य 'एष वो वैशम्पायनः' इति पित्रोः, शुकनासस्य, मनोरमायाश्च अदर्शयत् ।

तस्मिन्नेव च अन्तरे समं मदिरागौरीभ्यां चित्ररथहंसौ गन्धर्वराजौ अपि तत्रैव आजग्मतुः । आगतयोश्च तयोः जामातृदर्शनसमुत्फुल्लनयनयोः सहस्रगुणः इव महोत्सवामोदः प्रावर्तत । अथ चित्ररथः तारापीडमवादीत् । 'विद्यमाने स्वभवने किमर्थम् अरण्ये महोत्सवः क्रियते ? अपि च यद्यपि अस्माकम् अयमेव धर्म्यो विवाहः तथापि लोकसंव्यवहारः अनुवर्तनीयः एव । तत् गम्यतां तावत् अस्मदीयमवस्थानम् ।'

तारापीडस्तु तं प्रत्युवाच । 'गन्धर्वराज, **यत्रैव निरातिशयं सम्पत्सुखं तदेव वनमपि भवनम्** । तदीदृशं क्व अपरत्र सम्पत्सुखं मया प्राप्तम् । अन्यच्च सम्प्राति सर्वगृहाण्येव मया जामातरि ते संक्रामितानि । तत् वयस्य, वधूसमेतं तमेव आदाय गम्यतां गृहसुखानुभवाय' इति । चित्ररथः तथा अभिहितः, 'राजर्षे, यथा ते रोचते' इत्युक्त्वा, चन्द्रापीडमादाय हेमकूटमगात् ।

गत्वा च तत्र चित्ररथः कादम्बर्या सह समग्रमेव स्वराज्यं चन्द्रापीडाय न्यवेदयत्; पुण्डरीकाय अपि समं महाश्वेतया निजपदं हंसः । तौ तु हृदयरुचितवधूलाभमात्रकेणैव कृतार्थौ, न किञ्चित् अपि अपरं प्रत्यपद्येताम् ।

अथ अन्यस्मिन् काले हृदयवल्लभलाभमुदितापि कादम्बरी विषण्णमुखी चन्द्रापीडमूर्तिं चन्द्रमसम् अप्राक्षीत् । 'आर्यपुत्र, सर्वे खलु वयं मृताः सन्तः प्रत्युज्जीविताः परस्परं संघटिताश्च । सा

पुनर्वराकी पत्रलेखा अस्माकं मध्ये न दृश्यते । न विद्मः किं तस्याः केवलायाः वृत्तम्' इति । चन्द्रापीडमूर्तिश्चन्द्रमाः तच्छ्रुत्वा प्रीतान्तरात्मा प्रत्यवादीत् "प्रिये, कुतोऽत्र? सा हि खलु मद्दुःखदुःखिता रोहिणी शमं माम् उपश्रुत्य 'कथं त्वम् एकाकी मर्त्यलोकनिवासदुःखम् अनुभवासि?' इत्यभिधाय मच्च-रणपरिचर्यायै निवार्यमाणा अपि मर्त्यलोके जन्म अग्रहीत्। इतश्च जन्मान्तरं गच्छता मया पुनरपि मर्त्यलोकम् अवतरन्ती बलात् आवर्ज्य आत्मलोकं विसर्जिता। तत्र पुनः तां द्रक्ष्यासि' इति। कादम्बरी तु तच्छ्रुत्वा रोहिण्या उदारतया स्नेहलतया महानुभावतया पतिव्रततया च विस्मितहृदया परं लज्जिता न किञ्चिदपि वक्तुं शशाक ।

ततः चन्द्रापीडः एकदिवसमिव दशरात्रं स्थित्वा हेमकूटे, परितुष्टहृदयाभ्यां श्वशुराभ्यां विसर्जितः पितुः पादमूलम् आजगाम।

आगत्य च समकालमेव अनुभूतक्लेशं राजलोकम् आत्मसमं कृत्वा, समारोपितराज्यभारः पुण्डरीके, पित्रोः पादौ अनुचरन्, कदाचित् जन्मभूमिस्नेहात् उज्जयिन्यां, कदाचित् गन्धर्वराजगौरवेण हेमकूटे, कदाचित् रोहिणीबहुमानेन चन्द्रलोके, वसतिं चक्रे। ततः प्रभृति न केवलं चन्द्रमाः कादम्बर्या सह, कादम्बरी महाश्वेतया सह, महाश्वेता तु पुण्डरीकेण सह, पुण्डरीकोऽपि चन्द्रमसा सह परस्परावियोगेन सर्वे एव, सर्वकालं, सर्वसुखान्यनुभवन्तः परां कोटिम् आनन्दस्य अध्यगच्छन्।

समाप्तेयं कथा।

## टिप्पणी:—

## संस्कृतं—संस्कृत, मराठी, हिंदी

पृष्ठ १

काननम्—अरण्यम्—वन—जंगल

अच्छोदाभिधानम्—अच्छम् उदकं यस्य तत् अच्छोदम् । अच्छोदम् अभिधानं (नाम) यस्य तत् —निर्मळ पाणी असलेलें—जिसमें उजला पानी है।

सर:—जलाशय: —सरोवर—झील

भवानीपते:—पार्वतीपते:, शङ्करस्य

आयतनम्—मन्दिरम्

अर्क:—सूर्य: —सूर्य—सूरज

सोम:—चन्द्र:—चंद्र—चाँद

सम्भूतानि—जातानि—उत्पन्न झालेलें—पैदा हुवा

उपयेमे—परिणिनाय, विवाहम् अकरोत्—लग्न केलें, शादी की

आत्मजा—कन्या; आत्मन: जाता मुलगी—लडकी

२

मालाविपर्यय:—मालाविनिमय:, हारांत अदलाबदल—मालामें हेरफेर

मधुमास:—चैत्रमास:

अम्बया—जनन्या—आईनें—माँने

व्याहरन्ती—वदन्ती; भाषमाणा—बोलणारी—बात करनेवाली

अनाघ्रात—अन् + आघ्रात not smelt घ्रा—जिघ्राति; घ्रात—वास न घेतलेलें—न सूँघा हुआ।

उपारूढकौतुका—उपारूढं कौतुकं यस्याम् (ब. स.) in whom curiosity was produced ज्यांत आश्चर्य प्रकट झालें—जिसमें कुतूहल खिल उठा।

मधुकरी—भ्रमरी—भुंगास्त्री—भौंरव

कर्णावतंसीकृताम्—Used as an ear ornament (i.e. placed on the ear) कर्णभूषण केलेलें —कानोंका गहना

अवतंस:—सम्—कर्णभूषणम्

अदूरकोपा—शीघ्रकोपा; (अदूर: कोप: यस्या: सा) कोपिष्ट—जल्द चनखेवाला

किमभिधान:—किम् अभिधानं यस्य स: —जिसका शुभ नाम क्या है

सौरभम्—आमोद:—सुगंध—खुशबू

सुरासुरवन्दितचरणयुगलः—सुराः असुराश्च तैः वन्दितं चरणयुगलं यस्य—देव व राक्षसांकडून ज्याच्या पायांना वंदन केलें गेलें आहे—देव और राक्षसोंसे जिसके चरण चूमे हैं।

किं अनेन पृष्टेन?—किं प्रयोजनम् अनेन प्रश्नेन? या प्रश्नाचा काय उपयोग? इस सवालसे क्या लाभ?

मन्दाकिनीम्—स्वर्गङ्गाम्

संनिहिता—समीपे स्थिता

पुण्डरीकम्—श्वेतकमलम्, पांढरें कमळ

आलोकमात्रेण—दर्शनेन केवलेन—केवळ पाहून—सिर्फ़ देखनेसे

क्रियाः—संस्कारान्

पादपस्य—वृक्षस्य

३

उत्सङ्गे—अङ्के, on the lap—मांडीवर—गोदमें

आदाय—गृहीत्वा—घेऊन—लेकर

प्रश्नायासेन—प्रश्नपरिश्रमेण—वाया प्रश्नसे—फजूल सवालसे

रुचितसुरभिपरिमला—रुचितः सुरभिः परिमलः यस्याः—जिला सुंदर सुगंधाची रुचि आहे—जिसे दिलचस्प खुशबू प्यारा है

किंचिदुपदर्शितस्मितः—किंचित् उपदर्शितं स्मितं येन; किंचित् स्मितं कृत्वा—थोडें गालांतल्या गालांत हसून—चंद धीमे हंसकर

श्रवणात्—कर्णात्

तरलाङ्गुलेः—तरलाः (कम्पिताः) अङ्गुलयः यस्य सः तरलाङ्गुलिः

पुलकितम्—रोमाञ्चितम्—थरकांप—सिहरा हुआ

सलीलम्—लीलया सहितं यथा स्यात् तथा; लीलया, playfully सहज—हँसते हँसते

भर्तृदारिके—राजपुत्रि

प्रत्यासीदति—आसन्नः (समीपः) भवति—जवळ आहे—नजदीक है

मज्जनविधिः—स्नानविधिः

४

क्षुद्रजनक्षुण्णः—क्षुद्रजनेन आचरितः नीच माणसानें आचरलेला—कमीने आदमीने बरताया हुआ

विगतचेतनत्वम्—अन्यत्रगतमानसत्वम्; विमनस्कता, Absen-mindedness—उदास—विमन

दुर्विनीत—कुशिक्षित Mischievous—खोडयाळ—नटखट

मर्षयामि—क्षाम्यामि

अलीककोपेन—मिथ्याकोपेन
लटक्या रागानें—झूठे जलनसे

सविधम्—(अ.) सन्निधौ

एकावलीम्—मौक्तिकमालाम्
मोत्यांचा कंठा—मोतियोंका हार

अतिनिभृतपदः—अतिनिभृतानि
(निःशब्दानि Noiseless)
पदानि यस्य सः; निर्घोषसंचारः—
चोरट्या पावलाचा—चुपकेसे
चलनेहारा—दबे पाँव चलना

५

विश्रब्धम्—सविश्वासम्

६

सञ्जातवितर्कः—सञ्जातः वितर्कः
(शङ्का) यस्य—संशय आलेला—
असमंजसमें पडा हुआ

विटपान्तरितविग्रहः—विटपैः
(वृक्षैः) अन्तरितः (छादितः)
विग्रहः (शरीरं) यस्य—झाडाचे
आड लपलेला—पेडकी ओटमें
छिपा हुआ

अशोभनम्—अनिष्टम्

अपगतनिमेषेण चक्षुषा—पक्ष्मपात-
रहितेन नयनेन; with an un-
winking i. e. steady eye
टक लावून पाहणें—टकटकी
बांधकर

एकपदे (अव्यय)—सहसा; सपद्येव-
एकदम—फौरन्

७

वचनं आक्षिप्य—भाषणं प्रतिबध्य
Cutting short the speech
(बोलणें मध्येंच थांबवून)

ह्रदे—सरोवरे

प्रतिपत्तव्यम्—अङ्गीकर्तव्यम्—
स्वीकारण्यास योग्य—अपनाने के
काबील

उपलभ्य—ज्ञात्वा—जाणून—जानकर

कालातिपातः— वेलातिक्रमः
(कालस्य अतिपातः) उशीर—
देरी

८

सांप्रतम्—उचितम्

एनः(न०)—पापम्

हृदयदयितम्—हृदयप्रियम्

प्लाव्यमानः— being flooded
द्रवेण व्याप्यमानः (प्लु १ आ.)
चांदण्यांत बुडविला गेलेला

भुवनान्तरालम्—भुवनयोः अन्त-
रालम्

अवगुण्ठनम्—आच्छादनम्—झांकण.
—ढक्कन

रक्तांशुकेन—रक्तवस्त्रेण

९

निर्घृण—निर्दय-संगदिल

कुमुदम्—श्वेतकमलम्

व्यतिकरेण—वृत्तान्तेन

१०

क्षपाम्—रात्रिम्

प्रत्युषसि—प्रभाते-पहाटे-सवेरे

स्थाणुम्—शिवम्

व्यावर्तयितुम्—निवर्तयितुम् – परत फिराविण्यास-लौटानेकेलिये

व्याजेन—मिषेण-निमित्तानें-बहानेसे

पर्यङ्के—शयने, मञ्चके-पलंगावर-चारपाईवर

११

अनिर्वृतः—दुःखितः

अपगतामर्षः—अपगतः अमर्षः (क्रोधः) यस्य सः

विमृशन्—विचारयन्-गौर करने द्वारा

व्यतिकरम्—सम्बन्धम्-सरोकार

मयूखः—किरणः

वारद्वयम्—द्विवारम्, twice-दोनदां-दुबारा

वीप्सा—पुनरुक्तिः, द्विरुक्तिः दुहरानी

चरितार्था—सफला, सार्था, यथार्था

तुरङ्गमेण—अश्वेन

गीर्वाणवर्त्मना—देवमार्गेण, नभसा

उद्दामप्रचारिणा—उद्धतं गच्छता

उपसंहर—निवर्तय-परतून घे-लौटाले

१२

अवसाने—मरणे-मरणांत-मौत में

१३

त्रिभुवनललामभूता—त्रिभुवनभूषण-भूता

प्रतिमः—सदृशः-सारखा-सरीखा

अविषण्णधीः—अविषण्णा (अकुण्ठिता) धीः (बुद्धिः) यस्य सः

अन्तरान्तरा—मध्ये मध्ये-मध्यंतरीं--बीचबीमें

अनपत्यताजन्मा—अनपत्यातायाः जन्म यस्य सः

कृताभ्युत्थानाम्—स्वागतार्थे उत्थानं कृतवतीम्

करङ्कः—करण्डकः-करंडा-डिब्बा-

१४

परिग्रहः—स्वीकारः

अवदातम् कर्म—पुण्यकर्म

जन्मान्तरविहितम्—अन्यस्मिन् जन्मनि कृतम्

अभियुक्तेन—पण्डितेन

मानुष्यके—मनुष्यजातौ (मनुष्य-शक्तौ इत्यर्थः) मानवी सामर्थ्यांत-इनसान की ताकदमें

उपपादयितुम्—कर्तुम्

परिणतवयाः—परिणतं वयः यस्य सः; वृद्धः—म्हातारा—बूढा

अमोघफला—अमोघं फलं यस्याः सा that never fails as to the fruit फळ देण्यास न चुकणारी

पूर्णपात्रम्—प्रियनिवेदकेन गृह्यमाणं अलङ्कारवस्त्रादिकम्; a present of clothes or ornaments claimed by an attendant who brings some happy news शुभ-वार्ता आणणाऱ्या सेवकाला दिलें जाणारें बक्षीस

अप्रातिविधेये—प्रतिकर्तुम् अशक्ये

शोकानुबन्धः—शोकसातत्यम्—एक-सारखा शोक—लगातार रंज

१५

सपर्या—पूजा

क्षीणभूयिष्ठायाम्—क्षीणं भूयिष्ठं यस्याः, तस्याम्—जी बहुंशीं क्षीण झाली—जो करीब करीब क्षीण हुई हैं

अवितथफला—अवितथ (सत्यं, अवश्यंभावि) फलं यस्याः (सफला)

स्निग्धेन—स्नेहपूर्णेन—पूर्ण प्रेमानें—पूरी मुहब्बतसे

१६

अनुबध्नाति—अनुसरति—अनुसरतो—पीछे चलता है

ब्राह्मणसात्—ब्राह्मणाधीनम्

चूडाकरणम्—चौलकर्म

अनुशिप्रम्—शिप्राम् अन्वायतम् along the river शिप्रा, शिप्रा नदीच्या तीरावर

परिखा—खातम् (खंदक इति महाराष्ट्रभाषायाम्) ditch खंदक—खाई

१७

कलापः—समूहः—समुदाय—ढेर

सहजा—सह जाता, natural, स्वाभाविक

श्रमः—व्यायामः

महाप्राणता—महत् शारीरबलम् great strength

१८

उपगृहीतशिक्षम्—अधीतविद्यम्

प्रविष्टोऽसि षष्ठं अनुभवन् वर्षम्—षष्ठं वर्षं अनुभवन् (त्वं) (गुरु-

गृहं ) प्रविष्टोऽसि, षष्ठे वर्षे इत्यर्थः —सहाव्या वर्षात—छठे वर्षमें

इति कृत्वा—इति मत्वा, so thinking, असा विचार करून

यत्सत्यं ( अव्यय )—नूनम् ( खरोखरच इति भाषायाम्—सचमुच

उच्चैःश्रवाः—इन्द्रस्य अश्वः

परिचारार्थं—सेवार्थम्—सेवेसाठीं—खिदमतकेलिये

सदैवता—दैवतेन सह ( युक्ता ) ( ब. स. )

१९

आमन्त्रयांबभूव—संबोधयांचकार addressed उद्देशून बोलला

हेषारवः ( अश्वस्य शब्दः ) खिंकाळणें —हिनहिनाना

पीठम्—आसनम्

उपगूढः—आलिङ्गितः-मिठी मारली —गले मिला

२०

कृतावतरणमङ्गला—कृतम् अवतरणमङ्गलं यया ( अवतरणम्—'लिंबलोण उतरणें' )

लम्भिता—प्रापिता—मिळवूं दिली—पहुंचाई

समृद्धाः—फलिताः; पूर्णाः

उदन्तेन—वृत्तेन ( उदन्तः—happening, occurrence ) —बातमी—हाल, खबर

२१

रजतम्—रूप्यम्

तद्गुणाः—( चन्द्रापीडस्य गुणाः )

अस्मै—( चन्द्रापीडाय )

यवसम्—तृणम्—गवत—घास

आकीर्य—प्रक्षिप्य

अपरेद्युः—अन्यस्मिन् दिवसे (अहनि) क्वणितमणिनूपुराकुलचरणयुगलया—शब्दायमानैः मणिनूपुरैराकुलितं ( युक्तम् ) चरणयुगलं यस्याः सा, तया—वाजणाऱ्या पैंजणांनीं शोभिवंत पाय असलेल्यां; बजनेवाले पायलसे सजा पैर

२२

दुहितृनिर्विशेषम्—दुहितुः निर्गतो विशेषः यस्मिन् कर्माणि; कन्यातुल्यम्—मुलासारखी—बेटी जैसी

बन्दिन्—'कैदी' इति भाषायाम्; a prisoner

विश्रम्भेषु—रहस्यवस्तुषु-विश्वासाच्या गोष्टींत, गुप्त बातोंमें

२३

आयतनम्—स्थानम्

कालुष्यमुपयाति—मलिनीभवति
(कलुषस्य भावः कालुष्यम्)
रजिकरगभस्तयः—चन्द्रस्य किरणाः
प्रतिशब्दकः—प्रतिध्वनिः-गूँज
अभिनिवेशः—आसक्तिः; आग्रहः—
अहंकार—शेखी

२४

कामम्—अत्यर्थम्—खुशाल—कुशलसे
समारोपितसंस्कारः—समारोपिताः
(कृताः) संस्काराः यस्य सः

२५

दुकूलम्—क्षौमम् (रेशमी वस्त्र)
शेखरः—उत्तंसः, शिरोभूषणम्
('तुरा' Marathi)—कलगा
—झब्बा
समुत्सारणम्—जननिवारणम्
आस्थानम्—सभागृहम्
करेणुका—करिणी, हस्तिनी (हत्तीण
Mar.)
चक्रवालः—समूहः
सनाथीकृतः—सहितः
पुरोभागः—अग्रभागः
शातक्रतवी—प्राची—पूर्व—पूरब
(शतक्रतोः—इन्द्रस्य—इयम्)
आशा—दिक्, दिशा

२६

कुञ्जरः—गजः—हत्ती—हाथी

प्रसाधितानि—गृहीतानि, जितानि
पादपीठे—पदासने
घृष्ट—घृष् I. P.—घासणें—घिसना,
रगड़ना
चूडामणिः—शिरोमणिः
क्षितिः—पृथ्वी
समुच्छ्रित—(सम् + उद् + श्रि
I. U. P. P.) उन्नत—उंच—ऊँचा
आवासभूमिम्—सेनायाः तात्कालिकं
निवासस्थानम्—फौजेचें तात्पुरतें
राहण्याचें ठिकाण—सेना का
अस्थायी निवास
यामिनी—रात्रिः, निशा

२७

समीकुर्वन्—सरलीकुर्वन्, नतोन्नत-
विरहिताः कुर्वन्
किन्नरमिथुनम्— अश्वमुखद्वयम्,
किन्नरदम्पती
रभसाकृष्टचेताः—रभसेन (अति-
वेगेन) आकृष्टं चेतः यस्य सः

२८

समुपारूढम्—व्याप्तम्—व्यापलेलें—
फैला हुआ—
गुर्वर्थः—गुरोः (पितुः) अर्थः
(कार्यम्) वडिलाचें काम—
पिताका काम

अविरल—निबिड, घन
गुल्म—लताजालम्; a bush or thicket झुडपें
लतासंतानम्—लतानाम् आकुलत्वम्-वेलींनीं भरलेलें, लताओंकी बहुतायत
मर्त्यधर्मा—मनुष्यः
व्यावर्तयामास—निवर्तयामास

२९

अत्यायतम्—अतिविस्तीर्णम्
तरुखण्डम्—तरुसमूहम्
शीकरिणा—तुषारयुक्तेन—तुषारानें युक्त, फुहीसे भरा
अन्तः—सीमा—मर्यादा—हद
अवधिः—मर्यादा
आप्याययति—(आ + प्यै I. A. Caus.) पूरयति; प्रीणयति—पूर्ण करतो, प्रेम करतो—सचता है मुहब्बत करता है
समुच्चरन्तम्—प्रसरन्तम्

३०

शूलपाणेः—शङ्करस्य
असमर्थितम्—अतर्कितम्

३१

कृतम्—(अव्यय) अलम्—पुरे—काफी
अतिथिसपर्याम्—अभ्यागतपूजाम्

३२

आमीलित—संकुचित—सँकरा
अनुरोधात्—विज्ञप्त्या—विनंतीनें—विनयसे
विबुधाः—देवाः
वीजयन्—वातं प्रवर्तयन्; fanning—वारा घालणारा—पंखा झलनेहारा

३३

शठहृदयम्—शठं हृदयम् (कर्मधा. स.)
अप्रयोजनम्—निरर्थकम्—व्यर्थ—फजूल
हतशरीरं—हतं (दुष्टं) शरीरम् साकट देह, दूषित शरीर
उपरत—मृत
एनसा—पापेन
मकरकेतुः—(मकरः केतुः यस्य) मदनः

३४

समागमसरस्वती—समागमसूचका सरस्वती (वाणी)
धीरा हि—धीरा एव
बालमित्रम्—बालं मित्रम् (कर्मधा. स.)

उत्स्रक्ष्यामि—त्यक्ष्यामि

त्वं शरणं—त्वमेव आश्रयः—तूंच आधार—तूही सहारा

३५

गुरुवचनम्—पितृवचनम्

अवितथम्—न वितथम्, सत्यम्

३६

कलयसि—मन्यसे—तूं मानतोस—तेरी राय है

३७

पीठिकायाम्—आसने

प्रणयितां—स्नेहवत्ताम्

व्यपदेशेन—मिषेण—निमित्तानें—बहानेसे

३८

श्वेतभानुः—चन्द्रः

भावयन्—चिन्तयन्

क्षणदा—रात्रिः

क्षपितवान्—नीतवान्—घालविता झाला—बिताया-थी

कुमारस्य—( चन्द्रापीडस्य )

३९

स्कन्धावारम्—सैन्यम्

४१

लेखनवाचनविरतिरेव प्रयाणकालतां नेतव्या—पत्रवाचनावसाने एव प्रतिष्ठस्व ( पत्र वाचून होतांच नीघ )—खत पढ़ते ही चल देना

४२

प्रव्रज्या—संन्यासः

अरज्यत—अनुरक्तः अभवत्

सप्तसप्तिः—सप्त सप्तयः ( अश्वाः ) यस्य सः ( सूर्यः )—ज्याचे सात घोडे आहेत, जिसके सात घोडे हैं

निसृष्ट—दत्त

घनविसरः—घनसमूहः

४३

गोष्ठी—सम्भाषणम्

आपन्नवत्सला—आपन्नेषु ( शरणागतेषु ) वत्सला ( स्नेहयुक्ता )

४४

अयोघनः—अयसः ( लोहस्य ) घनः—हातोडा—लोहेका बडा हथौड़ा

परापतामः—निवृत्य गच्छामः—परत फिरून जाऊं—लौटकर चलें

४५

अथ—यदि

प्रसाध्य—आत्मसात् कृत्वा, जित्वा

भद्रकम्—कल्याणम्

४६

अनुपदम्—( पदम् अनुसृत्य ) पश्चात् ( पाठोपाठ, मागोमाग )—पीछे पीछे

भूमिं यावत्—भूमिपर्यन्तम्

४७

निरूप्यताम्—( नि+रूप् 10 P.) अन्विष्यताम् ( Mar. पाहावी ) खोज की जायें

सम्भाविताः—ज्ञाताः

देशिकः—मार्गदर्शकः

यानपात्राभ्यागमः—यानपात्रम्—( यानस्य-गमनस्य पात्रम् ) a boat; प्रवहणादिकं, तस्य अभ्यागमः ( प्राप्तिः )—नाव मिळणें—किश्तीका लाभ

अपररात्रः ( रात्रेः अपरः—उत्तरः—भागः ) उत्तररात्रः

४८

उत्कर्णः—उद्गतौ कर्णौ यस्य सः

तर्णकः—वत्सकः—वासरू—बछड़ा

४९

निगडितौ—बद्धौ

जीवितेन शपामि—( मराठी-गळ्याची शपथ ) हलफ उठाकर कहना; कसम खाकर कहना

परिकरः—परिवारः

५०

गार्हस्थ्ये—गृहस्थाश्रमे

आक्षिप्तचेताः—व्यग्रमनाः—ज्याचें मन गढून गेलें आहे—दिल मशगूल है जिसका

राजकम्—राज्ञां समूहः

अमुक्तिपक्षम्—मुक्तिः न भवेत् इति संभवम्

५१

परिबोधनम्—उपदेशः

५२

अमर्षः—क्रोधः

विरूपकम्—विरुद्धम् आचरणम्

कशा—चर्ममयी रज्जुः ( चाबूक ) —कोडा

अन्तरा—मध्ये

गणकः—ज्योतिर्विद्

लग्नम्—उदितः राशिः; 'राशीनां उदयो लग्नम्'—सितारा दिखाई देना

५३

स्रज्—माला

अपहर्षदृष्टिः—अपगतः हर्षः यस्याः, एतादृशी दृष्टिः यस्य

तत् एकधा—प्रथमं तावत् (in the first place) प्रथम—पहले पहल

आस्ताम्—भवतु, तिष्ठतु—असो—खैर

आत्ययिकम्—अत्यवश्यम् (urgent; निकडीचे ) त्वर्य—

शरीरस्थितिकरणाय —शरीरव्यापार-
कृते

५४

पारयति—शक्नोति

दुःखासिका—दुःखं आस्यते अस्याम् इति; चिन्ता

वृत्तम्—सदाचरणम्

वाच्यात्—जनापवादात्—लोक-निंदेने—लोगोंकी बुराईसे

विपरिवर्तते—विलीनः भवति

५५

हर्षहेषारवः—प्रमोदध्वनिः, हर्ष-सूचकः अश्वशब्दः

पुनर्निवारणम्—पुनर्गमनं—प्रतिषेधः

कायमानं—उटजम् ( Mar. झोपडी )—कुटिया

गव्यूतिः—क्रोशद्वयम्—दोन कोस—दो कोस

अवहत्—अचलत्

वैलक्ष्यम्—लज्जाम्—लाज – सकुचाई शर्म

अवहिताः सावधानाः—सजग

खिन्नः—श्रान्तः – दमलेला – थका हुआ—तंग आया हुआ

५६

अभिज्ञा—जानती

५७

उदीरितायाम्—उक्तायाम्

५८

व्याजीकृत्य—मिषीकृत्य – निमित्त करून—बहानेसे

५९

निर्वापयामि—सान्त्वयामि, शीतली करोमि—सांत्वन करतों—ढाढस बांधता हूँ।

आप्यायमानम्—पोष्यमाणम्

६०

लब्धसंज्ञा—प्राप्तचैतन्या ( लब्धा संज्ञा यया; प्रकृतिम् आपन्ना ) शुद्धीवर आलेली—होशमें आयी

आच्छिद्य—बलात् गृहीत्वा—बळ-जबरीनें घेऊन—जबरन् लेकर

६१

गतः अहम्—अहं गमिष्यामि

६२

अनुवृत्तिः—सेवा

अपचितिः—पूजा

६३

विनाकृतानाम्—रहितानाम्

वर्तमाने—वर्तमानकाले

६४

उपयाचितम्—'नवस' इति महा-राष्ट्रभाषायाम्—मनौती

६७

स्वस्थवत्—स्वस्मिन् स्थितः स्वस्थः; दुःखरहितः

आत्मजतां—पुत्रत्वम्

अन्तरित—व्यवहित, Concealed covered, झाकलेले

६८

बुध्यते—जानाति

प्रलघुपरिकरः—स्वल्पपरिवारः

६९

विरूपैः—अशुभैः

समुपनामितः—प्रापितः

नियतिः—दैवम्—नशीब—किस्मत

७०

जरापीतसारतनवः—जरया पीतं सारं (बलं) यासां, एवंभूताः तनवः येषाम्

आसज्य—न्यस्य—ठेवून—रखके

संस्तुतजनः—परिचितजनः—परिचित लोक

निवसनरुचिः—वस्त्राभिलाषः

आहारहार्दम्—भोजनप्रेम

नर्मालापः—विनोदः; क्रीडालापः

अक्षसूत्रेषु—जपमालिकासु

७१

वेलावनम्—तटकाननम्

लग्ना—संबद्धा

मध्यदेशः—विन्ध्यहिमालययोः मध्यम्

७२

कदम्बकम्—समूहः

शिरोधरा—ग्रीवा; Neck—मान—गर्दन

आपतितम्—आगतम्

शबरः—भिल्लः

कर्कशः—'राठ,' 'राकट' इति महाराष्ट्रभाषायाम्; Rough मज़बूत और खुर्दुरा

केसरि-कृत्तिः—सिंहचर्म

पिशितम्—मांसम्

उपहारः—भगवत्यै दीयमानं सत्त्वादि

शकुनिः—पक्षी—पंछी

७३

व्यलम्बत—विलम्बं चकार—उशीर केला, विलंब केला, रेंगाळला

अपगतासुः—अपगताः असवः (प्राणाः) यस्य सः—प्राण दूर निघून गेले

एवम्—तथा हि; अनेनैव न्यायेन

७४

खल (वि०)—दुष्ट—कमीना

उपपादयेत्—कुर्यात्

उद्भासमानः—दीप्यमानः—प्रकाशणारा—जगमगाता
सिष्णासुः—स्नातुम् इच्छुः

७६

भारती—वाणी
संवृत्ता—सञ्जाता—झाली—बनी

७७

मूढतायाम्—अज्ञानतायाम्, अज्ञानतासमये
तरलहृदयताम्—चञ्चलचित्तताम्
अनुबध्नासि—न परित्यजसि—सोडीत नाहींस—पीछा नहीं करता हैं।

७८

रसाक्षेपात्—रसाकर्षणात्
अचेतिता—अज्ञाता
भवः—जन्म
विकासहासिना—विकासेन हसति इति; Smiling heartily मनापासून हसत

७९

दिष्टया—भाग्येन
उत्क्षिप्य—उद्गृह्य 'उचलून' इति महाराष्ट्रभाषायाम्—उठाकर
इतरवत्—प्राकृतजनवत्, अशिक्षितजनवत्—अशिक्षिताप्रमाणें—अनपढ जैसा

तातस्य—(श्वेतकेतोः)
श्रिया—लक्ष्म्या (पुण्डरीकस्य मात्रा)
खरः (वि.)—कठिनः
खलीनम्—लगामाचा लोखंडी भाग, Bit of the bridle ('लगामाचें कड्याळें' इति महाराष्ट्रभाषायाम्)

८०

ककुभ्—दिशा
अवाशीर्यन्त इव—विदीर्णानि इव विस्कळित झाल्याप्रमाणें—छतराया हुआ

८१

प्रबोधः—जागरः
आशये—मनसि
अस्निग्धः—रूक्षः, कठोरः
अथ—यदि
पक्कणः—चाण्डालग्रामः
प्रभवति—समर्था भवति
अशनिः—वज्रम्
येन—(येन कारणेन)

८२

जातिस्मरः—जातिं स्मरति इति
धर्मः—पुण्यम्
पापजननम्—पापस्य उत्पादकम्
घृणा—जुगुप्सा (तिरस्कार, वीट इति भाषायाम्) अरुचि, उबग

पुण्यानि—पुण्यकर्माणि

८३

अपरम्—(अ.) अन्यत्र, इतरत्र

आक्षिप्य—संयम्य, निरुध्य-संयम करून-गुस्सा-पीजाकर

निर्वेदात्—अपरितोषात् (कंटाळून) तंग आकर-ऊबकर

८४

चाण्डालजात्यनुचितेन— °जात्यनपेक्षितेन

पाकशासनः—इन्द्रः

धौरेयः—धुरि भवः; अग्रगण्यः, मुख्यः

वर्णसंकराः—mixture of colours; intermixing of different castes

रंगांचें मिश्रण; जातीजातींचा सबगोलंकार, (वर्णसंकर, existed only in painting)

शास्त्रेषु चिन्ता— reflection only as to शास्त्र; (there was no—चिन्ता anxiety) शास्त्राचें मनन

प्रजानाम्—प्रजासु

करग्रहणम्—taking the hand in marring; levying taxes.

लग्नांत वधूचा हात धरणें; कर बसविणें

प्रथमे वयसि वर्तमानः—in the prime of youth. तारुण्याच्या भरज्वानींत

८५

दक्षिणापथात्—दक्षिणमार्गात् (भरतवर्षस्य दक्षिणभागात्) from the Deccan

अधिष्ठितपुरोभागाम्— अधिष्ठितः पुरोभागः यस्याः; who went before her

न्यवेदयत्—अर्पयामास—अर्पण केलें —चरणोंमें रखा

८६

धाम्ना—तेजसा

८७

इदं कर्म—इदम् अनुष्ठानम्

प्रतिविधेयम्—करणीयम्, कर्तव्यम्

ख्यापिता—कथिता

९०

आवर्ज्य—संतोष्य

आत्मलोकम्— आत्मनः लोकम् (चन्द्रलोकम् इत्यर्थः)

• • •

## सुभाषितानि

२२ नास्ति जीवितात् अन्यत् अभिमततरम् इह जगति जन्तूनाम् । ७३
२३ प्रायेण अकारणमित्राणि अतिकरुणार्द्राणि सदा खलु भवान्ति सतां चेतांसि । ७४
२४ पुण्यानि हि नामग्रहणान्यपि महामुनीनाम्, किं पुनर्दर्शनानि ? ७५
२५ सर्वथा धिक् विधातारम् असदृशसंयोगकारिणम् ! ८५
२६ सर्वः एव हि अविनयप्रवृत्तः अनुतापाग्निना न निवर्तते । ८६
२७ यत्रैव निरातिशयं सम्पत्सुखं तदेव वनमपि भवनम् । ८९

* * *

पृथ्वी ( १ ) स्वभाव मुनिचा भला कधीं न कोप त्या स्पर्शला ।
चौपाई ( हिंदी ) सहजधर्म मुनिजनका न्यारा । कभी क्रोधको दे न सहारा

पृथ्वी ( २ ) असे धन खरें खरें जगतिं धैर्य साधू जना ।
चौपाई ( हिंदी ) साधुजनों का धन है नीका । धीरज मात्र अन्यधन फीका ।

पृथ्वी ( ४ ) कुमार्गि रत मित्र तो जरि तया झणीं आवरा ।
चौपाई ( हिंदी ) बुरे मार्गपर बसे हितू को । दूर खींचकर झटसे रोको ।

पृथ्वी ( ५ ) असे सुलभ सांगणें सदुपदेश कीं तो परा.
चौपाई ( हिंदी ) परउपदेस सरल सुखकारी । नाहिं अपनेपर संकटवारी ।

पृथ्वी ( ६ ) न काय जगिं आचरी मनुज मात्र आशेमुळें.
चौपाई ( हिंदी ) आशा है बलवती फलाशा । अथक अकार्य करे नर नाशा ।

पृथ्वी ( ७ ) शकून शुभ दर्शवी जवळ तोष तूझ्या फुले.
चौपाई ( हिंदी ) सगुन सुमंगल सदा जताता । परमानंद पास है ताता ।

* * *

# बाणभट्ट

Few Sanskrit writers of eminence have left us any reliable record of their lives, but बाण is a remarkable exception to this rule. In his well-known work हर्षचरित and the introductory verses of कादम्बरी he has given an interesting account of his own life and his family-history. The following sketch of बाण's life is mainly based upon what he has said about himself in those works.

बाण lived in the seventh century. He spent his boyhood in प्रीतिकूट, an obscure village to the west of the river शोण in the United Provinces (उत्तर प्रदेश). When very young he lost his parents. But not being disheartened by this calamity he studied hard and mastered various branches of learning. He then travelled over भारतवर्ष, visited many royal courts, attended several universities (गुरुकुलs), conversed with learned men, took part in debates and returned home with a rich store of wisdom and experience.

बाण's reputation now began to spread far and wide. श्रीहर्ष, the great emperor and patron of learning, hearing about बाण, invited him to his Court and received him with great honour. Before long, बाण won his favour and became his court poet.

श्रीहर्ष has been doubly immortalised, by his own achievements and by the biography (हर्षचरित) which बाण has left us. In this work we get a lively picture of the king's court and his exploits and also many interesting glimpses of the customs and manners of those far-off times.

Two other works which are attributed to बाण are a dramatic piece – पार्वतीपरिणय and चण्डीशतक–a collection of a

* प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति । — गोवर्धन

hundred verses in praise of चण्डी or दुर्गा. But बाण is not known for great poetic gifts and his fame chiefly rests on his prose works.

The कादम्बरी§ is the fruit of बाण's mature genius. It is the best prose work in Classical Samskṛt. Its plot is based upon the story of मकरंदिका in the collections known as बृहत्कथा of गुणाढ्य. But the dull and unattractive material of the original has been transformed by the genius of बाण into a work of fascinating beauty.

बाण had scarcely finished half his work when he died prematurely. One wonders if the curse upon a principal character in the कादम्बरी that he should not have his wish fulfilled until he passed through another birth, had fallen upon the author himself! But luckily for us, बाण's son, भूषणभट्ट, who was every way worthy of his great father, took up the story where बाण had left it unfinished and carried it cleverly to its natural close. On the very first anniversary of his father's death, he gave this great romance to the world in its complete form. Thus is the truth of the old saying–†आत्मा वै पुत्रनामाऽसि– realised in this work, which was begun by father and finished by son. It would not be an exaggeration to say that such an occurrence is unique in the history of Samskṛt literature.

* * *

§ युक्तं कादम्बरीं श्रुत्वा कवयो मौनमाश्रिताः । — कीर्तिकौमुदी

† One reproduces oneself in one's son. (Literally—Thou art myself, re-named as son.)